

# ON THE SCENTED TRAIL

*Chandana is looking for adventure. Leaving her family holidaying at Coorg, she treks off into the nearby forest in search of fun and excitement. She doesn't know that she is in a sandalwood forest - till a sandalwood tree begins speaking to her.*

Did you know the sandalwood, whose Latin name is *Santalum Album*, grows largely in the States of Karnataka and Tamil Nadu? Some important sandal producing places in Karnataka are Dharwad, Shimoga, Chikmagalur, Mercara, Mysore, and Bangalore.










**DO YOU KNOW WHY THE SANDALWOOD TREE IS SO SPECIAL? SIMPLE! BECAUSE IT'S VERY USEFUL TO US. SOME OF THE USES OF SANDALWOOD ARE ILLUSTRATED HERE. CAN YOU IDENTIFY THEM?**

***Answers :*** A - in making soaps. B - sandal paste as medicine. C - in perfumes. D - for worship. E - sandalwood carving












*The house of Mysore Sandal has been bringing the goodness of sandalwood right into your homes for over 80 years.*



# A

ACTIVE

# B

BOSS

# C

CADET DX

# D

DEVIL DX

# E

ELEPHANT

# F

FISH

# G

GIRAFFE

# H

HEN

# I

INSECT

# J

JOKER

# K


# L

LI'L ANGEL
LAMBADA
LIMBO

# M

MISSILE
MISS INDIA Jr

# N

NEST

# O

ORANGE

# P

PIRANHA

# Q

QUEEN Jr

# R

ROBO COP

# S

SPARKY
SALSA

# T

TERMINATOR




# V

# W

**The largest range of kids bikes**

**HERO CYCLES**

THE ABC OF CYCLING



पुराणकथावली

२१



सङ्केतयोगी (वेतालकथा)

१५

मायासरोवरम्

७



विघ्नेश्वरः

६१

## अन्तरङ्गम्






**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandamama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384,
2347399
e-mail : advertisements@chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-6515111/
6565513/6565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/
2661946/2653057



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# भूमेः नाशयितारः के ? रक्षितारश्च के ?

भूदेव्याः सन्ति बहूनि पर्यायपदानि । तेषु 'पृथ्वी' इत्येतदपि अन्यतमम् । एतत् नाम कथम् आगतम् इति किं भवन्तः जानन्ति ?

स च कश्चन कालः, यत्र च जनाः सुखेन वसन्ति स्म । ते कृष्या विविधानि धान्यादीनि वर्धयन्ति स्म । ते यज्ञयागादीनां द्वारा ताभ्यः देवताभ्यः कृतज्ञताम् अर्पयन्ति स्म, याश्च विविधऋतूः सृष्टवत्यः, काले काले वृष्टिं च कारयन्ति स्म । कालः परिवृत्तः । प्रजापीडकानां शासनम् आरब्धम् । प्रजापीडकः राजा आज्ञापितवान् यत् इतः परं सर्वैः मह्यम् एव हवींषि अर्पणीयानि, अहम् एव देवः इति । ऋषयः तं सन्मार्गं बोधयितुं प्रयत्नं कृतवन्तः । किन्तु ते असफलाः सञ्जाताः । अन्ते कुपिताः ते तं राजानम् एव संहृतवन्तः । राज्ञः अभावात् देशे अराजकता उत्पन्ना । केनापि कस्यचिदपि वचनं पालनीयं न आसीत् ।

अतः देशे वृष्टिः विलुप्ता । धान्यवृद्धिः स्थगिता । क्षामः आरब्धः । तदा ऋषीणां प्रार्थनां पुरस्कृत्य अपरः कश्चन राजा प्रजापीडनं निवारयितुं सङ्कल्पं कृतवान् । सः भूदेवीम् आक्षिप्तवान् - 'भवती स्वपुत्रान् उपेक्षितवती' इति । तदा भूदेवी अवदत् - 'एतस्याः दुरवस्थायाः कारणं ते एव' इति । ततः राजा परिसरसंरक्षणविषये अवधानं दत्तवान् । प्रजाः तम् अनुसृतवत्यः । तस्य राज्ञः नाम एव पृथुः इति । अतः एव एषा भूमिः 'पृथ्वी' इति नाम प्राप्तवती ।

एषु दिनेषु 'परिसरनाशकाः कुत्र' इति अन्वेष्टव्यं नास्ति । यतः तादृशाः वयम् एव स्मः । पृथोः अवतारः पुनः भवेत् इति निरीक्षया न किमपि प्रयोजनम् । अस्मासु एकैकोऽपि भूदेव्याः संरक्षकः स्यात् । तत् कथमिति एतया सञ्चिकया सह दत्ता *'वसुधा'* ज्ञापयति किञ्चित्प्रमाणेन । जून्मासस्य पञ्चमे दिनाङ्के यत् जागतिकपरिसरदिनम् आचर्यते तत् निमित्तीकृत्य अस्ति एषा विशेषसञ्चिका ।

---

*सम्पादकः* - **विश्वम्**

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-९

**भारतीये क्रीडाक्षेत्रे बहवः श्रेष्ठाः आसन्, सन्ति अपि । तान् अधिकृत्य पृष्टानां प्रश्नानाम् उत्तररूपेण कति जनान् अभिज्ञातुं शक्नुयुः भवन्तः ?**

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. अहं क्रिकेट्स्पर्धासु २९ शतकानि अर्जयन् प्रसिद्धस्य डान् ब्राडमन्वर्यस्य समताम् अवाप्तवान् । किं माम् अभिज्ञातुं शक्नुयुः भवन्तः ? ........................................

2. गते वर्षे अहम् अखिल-इंग्लेण्ड्-ब्याड्मिण्टन्स्पर्धायां विजयं प्राप्य सुविख्यातः अभवम् । किं मम नाम जानन्ति भवन्तः ?
........................................

3. 'डयमानः सिक्खः' इति लोके विख्यातः अहं १९६० तमे वर्षे प्रवृत्तायाम् ओलम्पिक्स्पर्धायां ४०० मी.धावने चतुर्थं स्थानं प्राप्तवान् । किं मां जानन्ति भवन्तः ?
........................................

4. १९८५ तमे वर्षे प्रवृत्तायां जागतिक-अम्येचूर्-बिलियर्ड्स्-स्पर्धायां विजयं प्राप्य 'एतादृशविजयं प्राप्तवत्सु अल्पवयस्कः' इति ख्यातिं गतः अहम् । किं मदीयं नाम ज्ञायते भवद्भिः ?
........................................

5. अहं १९५३ तमे वर्षे कनीयसीयविम्बल्डन्-स्पर्धायां यदा विजयी जातः तदा मम वयः आसीत् १६ वर्षाणि । मया यादृशः विजयः प्राप्तः तादृशः एव विजयः मम पुत्रेणापि प्राप्तः । सोऽहं कः ?
........................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ........................................
........................................
........................................
........................................

भागग्रहीतुः नाम ........................................
वयः .................... कक्ष्या ....................
सङ्केतः ........................................
........................................
........................................
पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-९**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, जुलै, २००२

***नियमाः –***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

*भवद्भ्यः पारितोषिकं ददाति*





# मायासरोवरम्

## ३

*(सेनाध्यक्षस्य पुत्रं मङ्गलवर्माणं जयशीलः व्याघ्रात् रक्षितवान् । राजा कनकाक्षः तस्य प्रशंसां कृतवान् । मन्त्रिणः सूचनायाः अनुगुणं जयशीलाय उद्योगः दत्तः राज्ञा । मन्त्री यदा अग्रिमकार्यस्य विषये विवरणं यच्छन् आसीत् तदा कश्चन भटः छिन्नं खड्गं मुक्ताहारं च स्वीकृत्य तत्र आगतवान् । तदनन्तरम् ......)*

सैनिकेन आनीतं छिन्नं खड्गं मुक्ताहारं च दृष्ट्वा राजा कनकाक्षः, मन्त्री धर्ममित्रश्च आश्चर्यचकितौ । मन्त्री मुक्ताहारं खड्गं च अवधानपूर्वकं दृष्ट्वा उक्तवान् – ''महाराज ! एषः मुक्ताहारः युवराज्ञ्याः इव एव भासते खलु ? एवमेव एषः खड्गः युवराजस्य एव स्यात् इति सन्देहः मम'' इति ।

राजा तदुभयं परीक्षादृष्ट्या दृष्ट्वा उक्तवान् – ''ममापि सः एव सन्देहः । एतदुभयं तस्य वृक्षस्य अधः एव प्राप्तं, यत्र च युवराज्ञी युवराजश्च अदृश्यतां गतौ आस्ताम् । किन्तु एतदुभयं तयोः एव इत्यत्र किं प्रमाणम् ?'' इति ।

''अहं युवराज्ञ्याः सखीं मल्लिकाम् अत्र आनाययामि । सा खड्गविषये किमपि वक्तुं न शक्नुयात् कदाचित् । किन्तु हारं तु अभिज्ञातुं शक्नुयात् एव, यदि सः युवराज्ञ्याः स्यात्'' इति अवदत् मन्त्री धर्ममित्रः ।

राज्ञः आदेशं प्राप्य कश्चन भटः मल्लिकां तत्र आनीतवान् । सा युवराज्ञ्याः अदृश्यता-



कारणतः नितरां खिन्ना आसीत् । हारः कुत्र प्राप्तः इति अनुक्त्वा एव राजा तं हारं तस्यै दत्तवान् । ताम् अवदत् च – ''अन्तःपुरस्य कस्याश्चित् स्यात् एषः । विचार्य हारस्वामिन्यै ददातु एतम्'' इति ।

मल्लिका क्षणकालं हारं निर्निमेषदृष्ट्या अपश्यत् । ततः गद्गदकण्ठा सा अवदत् – ''महाराज ! एषः हारः युवराज्ञ्याः एव । अरण्यं प्रति विहारार्थं गमनसमये सा एतं हारं धृतवती आसीत्'' इति ।

हारः युवराज्ञ्याः एव इति मल्लिका यदा दृढीकृतवती तदा महाराजः दुःखावृतः जातः । सः मल्लिकां किमपि वक्तुम् इच्छति स्म, किन्तु किमपि प्रष्टुं न शक्तः । तस्य कण्ठः अवरुद्धः । नेत्राभ्याम् अश्रुधारा निर्गता । सः शिरः अवनमय्य मौनेन अतिष्ठत् ।

राज्ञः एतां शोचनीयां दशां दृष्ट्वा मन्त्री मल्लिकाम् अपृच्छत् – ''एतादृशं हारं धनिकमहिलाः अन्याः अपि धर्तुम् अर्हेयुः खलु ? एवं स्थिते एषः हारः युवराज्ञ्याः एव इति भवती कथं वक्तुं शक्नोति ?'' इति ।

मल्लिका हारस्य मौक्तिकद्वयं दर्शयन्ती उक्तवती – ''कर्तितभागम् एतत् मौक्तिकद्वयं पश्यतु । कदाचित् मयि कुपिता युवराज्ञी माम् उद्दिश्य एतं हारं क्षिप्तवती आसीत् । तदा लक्ष्यच्युतः हारः वृक्षेण घट्टितः अभवत् । तदा उभयोः मण्योः कश्चन भागः विलुप्तः जातः'' इति ।

मल्लिकायाः वचनतः निश्चितम् अभवत् यत् हारः युवराज्ञ्याः काञ्चनमालायाः एव इति । ततः छिन्नः खड्गः अपि युवराजस्य एव इत्यत्र सन्देहः एव न अवशिष्टः ।

राजा अपृच्छत् – ''सः भिल्लयुवकः इदानीं कुत्र अस्ति ?'' इति ।

तदा हारं खड्गं च आनीतवान् भटः अग्रे आगत्य अवदत् – ''तस्य मानसिकस्थितिः उत्तमा नास्ति । अस्माकं प्रश्नानाम् उत्तरदाने सः असमर्थः । 'द्विपादयुक्तः मकरः' इति तु सः पुनः पुनः वदति'' इति ।

एतत् श्रुत्वा सिद्धसाधकः अवदत् – ''महाराज ! भवान् जानाति एव यत् महाकालपरिवारीयाः भूतगणाः कदाचित् विचित्रवेषं धृत्वा लोके सञ्चरन्ति इति । एषः भिल्लतरुणः भूताविष्टः स्यात् । तं मदधीनं करोतु । भूतं वशीकृत्य अहं तन्मुखात् वस्तुस्थितिं वाचयिष्यामि । एतत् कर्तुं शक्नोमि इत्यत्र मम पूर्णः विश्वासः अस्ति । एतदनन्तरं जयशीलेन

सह अरण्यं प्रति गमनाय मह्यम् अपि अनुज्ञां ददातु कृपया'' इति ।

राजा भूतोच्चाटनार्थं सिद्धसाधकाय अनुमतिं दत्तवान् । ततः जयशीलः सिद्धसाधकः च एकेन भटेन सह ततः निर्गतौ । तौ एकस्य वटवृक्षस्य समीपं गतवन्तौ । तत्र अन्ये अपि केचन भिल्लाः आसन् । छिन्नखड्गादिकम् आनीतवान् भिल्लः तत्र बद्धः आसीत् । तत्समीपे कश्चन भूतवैद्यः आसीत् । 'ह्रीं फट्, हूं फट्' इत्यादिकं वदन् सः तं युवकस्य उपरि तदा तदा भस्म क्षिपन् आसीत् । जयशीलः, सिद्धसाधकः, भटः च तत् स्थलं प्राप्य सर्वं दृष्टवन्तः । सिद्धसाधकः स्वस्य दण्डम् उन्नीय आज्ञापितवान् यत् एतत्सर्वं स्थगनीयम् इति ।



भूतवैद्यः मुखं परिवृत्य दृष्टवान् । स्वस्य कार्ये विघ्नम् उत्पादितवतः विषये तस्य महान् क्रोधः आगतः । सः यावत् किमपि वक्तुम् उद्युक्तः तावता भटः अवदत् - ''अलं क्रोधेन । एषः अस्माकम् आस्थानमान्त्रिकः अस्ति'' इति ।

सिद्धसाधकः द्वित्राणि पदानि अग्रे स्थापयित्वा - ''अये नीचग्रहोपासक, एतस्य मन्त्रदण्डस्य साहाय्येन भवन्तं भस्मीकर्तुं शक्नोमि । आकाशे क्षेप्तुम् अपि शक्नोमि । किम् एतत् ज्ञायते भवता ?'' इति अवदत् ।

भूतवैद्यः भयकारणतः कम्पमानः जातः । ततः सिद्धसाधकः भीत्या कम्पमानस्य भिल्लयुवकस्य समीपं गत्वा अवदत् - ''अये भिल्लभीम ! यः द्विपादयुक्तः मकरः भवति भयम् अजनयत् तम् एषः धीराग्रणीः मारितवान् अस्ति । अतः अलं भीत्या । उत्तिष्ठतु । तस्य मारणार्थम् उपयुक्तः खड्गः अत्र अस्ति, पश्यतु'' इति वदन् जयशीलस्य कोषतः खड्गम् आकृष्य दर्शितवान् ।

भीतः भिल्लयुवकः उत्थाय अवदत् - ''महोदय ! भवता यः द्विपादयुक्तः मकरः मारितः तस्य शवः कुत्र इदानीम् ?'' इति ।

तदा सिद्धसाधकः अवदत् - ''मनुष्यः मृतः भवति चेत् तदीयः शवः प्राप्यते । किन्तु पिशाचः मृतः भवति चेत् शवः न प्राप्यते । तदस्तु, सः छिन्नः खड्गः मुक्ताहारः च कुत्र प्राप्तः भवता ?'' इति ।

भिल्लयुवकः स्वरं समीकृत्य अवदत् - ''महोदय ! यदा अहं मृगयार्थं मद्वसतितः प्रस्थितः तदा मया वृक्षशाखायाम् उपविश्य ध्वनिं कुर्वन् वन्यकुक्कुटः दृष्टः । मया तं



लक्ष्यीकृत्य बाणप्रयोगः कृतः । स च बाणः तस्य पक्षे लग्नः । अतः उड्डयने असमर्थः सः एकस्मिन् गुल्मे पतितः'' इति उक्त्वा सः सिद्धसाधकं जयशीलं च एकस्य गुल्मस्य समीपं नीतवान् । ''एतस्य गुल्मस्य समीपे एव मया सः छिन्नः खड्गः मुक्ताहारः च प्राप्तः'' इति अवदत् च ।

भिल्लयुवकस्य वचनं यावत् न समाप्तं तावता एव सिद्धसाधकः अवनम्य गुल्मे दृष्टिं प्रसारयन् - ''जयशील ! महारण्ये एतस्मिन् कण्टकमये गुल्मे कश्चन प्राचीनः ताडपत्रग्रन्थः दृश्यते, पश्यतु । जय महाकालि !'' इति उक्त्वा एकं ताडपत्रग्रन्थं गृहीतवान् ।

तस्य ताडपत्रस्य दर्शनात् सिद्धसाधकस्य उत्साहः प्रवृद्धः । तस्य मुखं विकसितं जातम् । सः तस्य ग्रन्थस्य एकैकं पत्रम् अपि उद्घाट्य परिशीलितवान् । तत्रत्यविषयाणां पठने निमग्नः सः पार्श्वस्थं जयशीलम् अपि विस्मृतवान् एव । तस्य एतां तन्मयतां दृष्ट्वा जयशीलः आश्चर्यचकितः । सिद्धसाधकः स्वगतम् अवदत् - ''का भाषा एषा ? कैः उपयुज्येत एषा भाषा ? एतानि पत्राणि ताडवृक्षस्य तु न । स्थूलानि दृश्यन्ते एतानि । प्रायः कमलपत्राणि स्युः एतानि इति भाति'' इति ।

जयशीलः सिद्धसाधकस्य हस्तात् तं ताडग्रन्थं स्वीकृत्य परीक्षादृष्ट्या परिशील्य अवदत् - ''भिल्लयुवकेन यस्य द्विपादयुक्तस्य मकरस्य विषये उक्तं सः एव अत्र एतं पातितवान् स्यात्'' इति ।

''आम् । तथैव स्यात्'' इति उक्त्वा सिद्धसाधकः भिल्लयुवकम् उद्दिश्य प्रश्नं कृतवान् - ''सः द्विपादयुक्तः मकरः अत्र किमर्थम् आगतः स्यात् ?'' इति ।

''श्रीमन् ! गुल्मे पतितं वन्यकुक्कुटं प्राप्तुम् अहं गुल्मसमीपे अवनम्य स्थितः आसम् । तावता पृष्ठभागतः कश्चन शब्दः श्रुतः । यदा अहं मुखं परिवृत्य दृष्टवान् तदा भयङ्करं द्विपादयुक्तम् एकं मकरं दृष्टवान् । भयेन अहम् आक्रन्दनं कृतवान्, तत्रैव मूर्च्छितः अभवं च'' इति अवदत् भिल्लयुवकः ।

जयशीलः तस्य स्कन्धे स्वहस्तं स्थापयित्वा अपृच्छत् - ''यं वन्यकुक्कुटं लक्ष्यीकृत्य भवान् बाणप्रयोगं कृतवान् सः वन्यकुक्कुटः कुत्र ?'' इति ।

भिल्लयुवकः यावत् उत्तरं वक्तुम् उद्युक्तः तावता भूतवैद्यः कोपेन अवदत् - ''पर्वतदेवी तम् उन्नीय नीतवती स्यात् । प्रातः एव वन्य-

कुक्कुटं मारयता एतेन अपराधः कृतः'' इति ।

तं क्रोधेन पश्यन् जयशीलः सिद्धसाधकम् उद्दिश्य अवदत् - ''मम तु भासते यत् अत्र सर्वे महामूर्खाः एव सन्ति इति । एतेभ्यः किमपि विवरणं न प्राप्येत । तस्य मकरकायस्य अन्वेषणाय प्रायः अस्माभिः एतस्मिन् अरण्य-प्रदेशे सप्ताहं यावत् अटनीयं भवेत् । सः मकरकायः तु अस्माभिः अन्वेष्टव्यः एव'' इति ।

''भवता युक्तम् एव उक्तं जयशील ! यः अत्र ताडग्रन्थं पातितवान् सः एव युवराज्ञीं युवराजं च अपहृतवान् स्यात् । सः मकरकायः कोऽपि राक्षसः, यक्षः, किन्नरः, विद्याधरः वा स्यात्'' इति अवदत् सिद्धसाधकः । ततः तौ समीपस्थं पर्वतम् आरोढुम् उद्युक्तौ जातौ । तदा ताभ्यां सह आगतः भटः अवदत् - ''श्रीमन् ! प्रतिगमनाय मह्यम् अनुज्ञा दीयताम् । महाराजाय कोऽपि सन्देशः किम् अस्ति ?'' इति ।

तदा सिद्धसाधकः अवदत् - ''यत्र युवराजः युवराज्ञी च अदृश्यतां गतवन्तौ तस्य वृक्षस्य समीपे एव कश्चन ताडग्रन्थः प्राप्तः अस्ति इत्येतां शुभवार्तां महाराजं वदतु । तस्य ताडग्रन्थस्य साहाय्येन वयं युवराज्ञीं युवराजं च अचिरात् एव अन्वेक्ष्यामः । दुष्टानां संहारं कृत्वा राजकुमारीराजकुमारौ राजभवनं प्रति आनेष्यामः । एतम् अपि विषयं महाराजं वदतु'' इति ।

सिद्धसाधकस्य वचनं श्रुत्वा जयशीलः हसन् घनारण्यं उद्दिश्य प्रस्थितवान् । अचिरात् एव पर्वतमूले कश्चन कुग्रामः प्राप्तः । ग्रामस्य



सर्वे जनाः गृहात् बहिः आगत्य आक्रन्दनं कुर्वन्तः आसन् । किङ्कर्तव्यतामूढाः आसन् ते । तेषां भीतेः कारणम् आसीत् - तस्मिन् दिने प्रातः यावानलक्षेत्रे प्रवृत्ता घटना । तस्याः विवरणम् एवम् -

यावानलक्षेत्रे एका रक्षाकुटी आसीत् । चतुर्दशवर्षीयः कश्चन तरुणः तत्र उपविश्य क्षेत्ररक्षणं कुर्वन् आसीत् । तेन वर्धितसस्यानां मध्ये आगच्छन् कश्चन गजः दूरात् दृष्टः । उच्चध्वनेः उत्पादनतः गजः दूरं प्रेषयितुं न शक्यः इति सः जानाति स्म । सः तरुणः तु साहसी एव । गजः क्षेत्रस्थानि सस्यानि अधिकतया यथा न नाशयेत् तथा किमपि करणीयम् इति तेन चिन्तितम् । सः एकं शिलाखण्डम् उन्नीय तं गजं लक्ष्यीकृत्य क्षिप्तवान् ।

सः शिलाखण्डः गजे लग्नः । प्रहारं



सः तस्य तरुणस्य समीपम् आगत्य अभयहस्तं दर्शयन् अवदत् - '' भोः, अलं भीत्या । मया यथा उक्तं तथा आचरतु । ग्रामं गत्वा मदर्थम् उत्तमम् आहारम् आनयतु । ग्रामे कोऽपि उत्तमः वैद्यः अस्ति चेत् सोऽपि आनेतव्यः । सः शस्त्रचिकित्सातज्ज्ञः यदि स्यात् तर्हि वरम् । अत्र पश्यतु । मम उदरे लग्नः एषः छिन्नखड्गः अपनेतव्यः अस्ति तेन । यदि एतत् साहाय्यं क्रियते तर्हि योग्यः पुरस्कारः दास्यते '' इति ।

कम्पमानः एव सः तरुणः तदीयं सर्वं वचनं श्रुतवान् । अथः आगमने तस्य भीतिः आसीत् । एतत् जानन् सः विकृताकारः तम् अवतारितवान् ।

यदा भूमौ पादौ लग्नौ तदा तस्य तरुणस्य शरीरे चैतन्यम् आगतम् । यमकिङ्करात् मुक्तः इव व्यवहरन् सः चीत्कारं कुर्वन् ततः वेगेन धावितवान् ।

ग्रामे गृहाणां पुरतः उपविश्य जल्पनं कुर्वन्तः आसन् जनाः । धावनपूर्वकम् आगच्छन्तं बालं दृष्ट्वा ते चिन्तितवन्तः यत् वन्यसूकराः हरिणाः वा क्षेत्रं प्रविष्टवन्तः स्युः इति । अतः ते पृष्टवन्तः - ''रे, किमर्थम् एवं धाव्यते ? किं प्रवृत्तम् ?'' इति ।

सः तरुणः प्रवृत्तं सर्वं निवेदितवान् । किन्तु तेषु कोऽपि तस्य वचने न विश्वसितवान् । केचन भावितवन्तः यत् एतस्य मतिः भ्रष्टा जाता अस्ति इति । तावता तत्र आगतः गणाचार्यः जनानां मुखतः प्रवृत्तं सर्वं श्रुत्वा अवदत् - ''बालकः यत् उक्तवान् तत्र आश्चर्यस्य अंशः कोऽपि नास्ति । यदा मयि

प्राप्तवान् गजः प्रायः घीङ्करोति । किन्तु एषः गजः घीङ्कारं न अकरोत् । गजस्य उपरि उपविष्टः विचित्राकारकः तम् उद्दिश्य - ''रे बाल ! किमर्थं शिला क्षिप्यते ? अहं कः इति किं भवान् जानाति ?'' इति वदन् उच्चैः हूङ्कारं कृतवान् ।

एतत् श्रुत्वा सः तरुणः भीत्या कम्पमानः जातः । स्वेदेन आर्द्रः अपि अभवत् सः । सः रक्षाकुट्याः अट्टात् अवतीर्य धावनं कर्तुम् इच्छति स्म । किन्तु तथा कर्तुं न शक्तं तेन । सः प्रतिमावत् अविचलः स्थितवान् ।

द्वित्रक्षणाभ्यन्तरे गजः रक्षाकुटीसमीपम् आगतः । सः गजः सामान्यः इव न आसीत् । तस्य समग्रे शरीरे मकरचर्म दृश्यते स्म । गजस्य उपरि यः उपविष्टः आसीत् सः अपि मकरचर्मणा आवृतः आसीत्, मकरमुखं शिरोभूषणत्वेन धृतवान् च आसीत् ।

भूतः आविष्टः भवति तदा अहम् अपि जल-गजान्, मकरमुखान् मानवान्, द्विशिरस्कान् सिंहान्, दशशिरस्कान् अपूर्वमानवान् च पश्यामि'' इति ।

''तदस्तु, इदानीम् वदतु – अस्माभिः किं करणीयम् इति । आगतः सः अस्मान् सर्वान् न नाशयेत् खलु ? तदर्थं किं करणीयम् ?'' इति अपृच्छत् तत्रैव स्थितः ग्रामप्रमुखः ।

एतद्विषये एव तत्र परस्परचर्चा प्रवृत्ता । तदा एकः अवदत् – ''तस्य शरीरे छिन्नः खड्गः संलग्नः अस्ति । सः आहारसामग्रीं वैद्यं च इच्छति । अतः आहारः तु नेतव्यः । तेनैव सह वैद्यस्य चरकाचार्यस्यापि नयनं वरम्'' इति ।

एतत् श्रुत्वा चरकाचार्यः भयेन कम्पमानः अवदत् – ''मया तस्य विलक्षणराक्षसस्य कीदृशी चिकित्सा कर्तुं शक्येत ? केनचित् उत्तमेन शस्त्रचिकित्सकेन तस्य चिकित्सा कर्तुं शक्येत, न तु मादृशेन सामान्येन । अतः अस्माकं ग्रामस्य नारायणं नयामः चेत् वरं स्यात् । यदि सः तस्य शरीरात् खड्गम् अपनयेत् तर्हि अहं प्रभावशालिनः औषधस्य साहाय्येन रक्तस्रावं स्थगयित्वा अग्रिमचिकित्सां कर्तुं शक्नुयाम्'' इति ।

द्वौ पुरुषौ धावन्तौ गत्वा नारायणम् आनीतवन्तौ । नारायणः गमनं निराकुर्वन् अवदत् – ''मया एतत् करणीयम् ? सर्वथा न शक्यते । अहं तस्य शरीरे लग्नं खड्गम् अपनेतुं न शक्नोमि । न करोमि एतत्'' इति ।

सः ततः यथा न पलायेत तथा द्वित्राः दृढकायाः तं गृहीतवन्तः आसन् । ग्रामप्रमुखः आज्ञास्वरेण अवदत् – ''खड्गम् अपनेतुम् एतस्य शक्तिः अस्ति उत न इति अनन्तरं परिशीलयाम । आदौ वयं तत्र गच्छाम । गमनसमये खड्ग-शूल-लवित्रादीनि आयुधानि नयाम । एषः तरुणः यत् उक्तवान् तत् सत्यम् उत मिथ्या इति तत्र गमनानन्तरं ज्ञायते'' इति ।

जनाः खड्ग-शूल-दण्ड-लवित्रादीन् गृहीत्वा ततः प्रस्थितवन्तः । आयुधानि गृहीत्वा आगच्छतः जनान् दृष्ट्वा सः गजस्थः विकाराकारः प्रहारेण गजं चोदितवान् । एतस्मात् गजः शुण्डाम् उन्नीय घीङ्कुर्वन् ग्रामीणानां दिशि वेगेन आगतवान् ।

– *(अनुवर्तते)*






# अभिनन्दनानि, युवनायकाः !

चन्दमामा तान् युवनायकान् अभिनन्दति, ये च अक्टोबर् - २००१ तः मार्च् - २००२ पर्यन्तं चन्दमामायां प्रवृत्तायां 'हिरो'स्पर्धायां (१-६) भागं गृहीत्वा विजयिनः जाताः । विजेतारः प्रायोजकसंस्थातः 'हिरो'द्विचक्रिकां प्राप्स्यन्ति यथाकालम् ।

**अक्टोबर् - २००१**

*वि. कौसल्या*, नागपुर

*एस्. आर्. राहुलः*, बेङ्गलूरु

*नारायणदेवः*, भद्रजन्, राजस्थानम्

**नवम्बर् - २००१**

*डि. बृन्दा*, विशाखपत्तनम्

*नेहा सिन्हा*, उदयपुर कोर्ट्, त्रिपुरा

*प्रणीतप्रकाशमन्त्री*, अमरावती

**डिसेम्बर् - २००१**

*विरल के. दवे*, दमनगर, अमरेली जि.

*पि. वि. राघवेन्द्रन्*, होसूरु

*पार्थ के. पाण्ड्य*, वडोदरा

**जनवरी - २००२**

*एस्. दीपक कुमार्*, विशाखपत्तनम्

*एल्. भावना*, तिरुपति

*बि. एस्. यशोदा*, बेङ्गलूरु

**फेब्रवरी - २००२**

*के. श्रीरामः*, कोल्कता

*शङ्कु बेनर्जी*, नरोत्तमनगर, अरुणाचलप्रदेशः

**मार्च् - २००२**

*सोनम् नागर्*, उज्जैन्

*जे. जैप्रकाशः*, चेन्नै

*एम्. विद्याधरी*, हैदराबाद

**अभिनन्दार्हा भवन्तः !**

# ओ.टि.डि.सि.स्पर्धा १-७ विजेतृभ्यः साधुवादाः




चन्दमामा तान् विजेतॄन् साधुवादं वक्तुम् इच्छति, ये च चन्दमामायाः सप्टम्बर् - २००१ सञ्चिकातः मार्च् - २००२ सञ्चिकान्तं यावत् ओरिस्साप्रवासोद्यमाभिवृद्धिसंस्थानेन (OTDC) आयोजितासु स्पर्धासु (१-७) भागम् ऊढवन्तः । विजेतारः दिनत्रयं रात्रिद्वयं यावत् चतुर्भिः परिवारसदस्यैः सह ओटिडिसि-पान्थनिवासभवने वासं कर्तुम् अर्हन्ति ।

**सप्टम्बर् - २००१**

*परीक्षित् पराग गोखले*, विरार् (पश्चिम)

**अक्टोबर् - २००१**

*अनिल अजितव्*, भुवनेश्वरम्

**नवम्बर् - २००१**

*देवीप्रसादनन्दा*, जयपुरम्

**डिसेम्बर् - २००१**

*सोमेशमिश्रः*, चिदम्बरम्

**जनवरी - २००२**

*निशाद के. कुलकर्णि*, पुणे

**फेब्रवरी - २००२**

*के. अविनाशः*, विझागनगरम्

**मार्च् - २००२**

*आर्य विभास कुमार*, जैपुरम्

*विजेतृभ्यः समर्प्यन्ते साधुवादाः ।*

## वेताल-कथा

# सङ्केत-योगी

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! मध्यरात्रकालः एषः । भूत-पिशाचादयः शृगालवृकादयः च सञ्चरन्ति एतस्मिन् काले । एतदवसरे सञ्चारः किं प्राणापायकरः न ? किं कर्तव्याकर्तव्यविवेकः नास्ति भवतः किमर्थं भवान् एतादृशं दुस्साहसं करोति ? किं कोऽपि महात्मा महायोगी वा भवन्तम् अत्र प्रवर्तितवान् यदि तथा, तर्हि जागरूकेण भवितव्यं भवता । यतः एतादृशाः जनाः अवसरे प्राप्ते स्वसुखमात्रं चिन्तयन्ति । अत्र उदाहरणरूपेण कस्यचित् योगिनः कथां श्रावयामि । श्रद्धया शृणोतु



पलायताम् । अन्यथा एषः सण्डः भवन्तं व्रणितं करिष्यति'' इति ।

किन्तु योगी शान्ततया उपविष्टः आसीत् । सण्डः श्रान्तः आसीत् । अतः सः योगिसमीपम् आगत्य क्षणकालं स्थित्वा श्रान्तिपरिहारार्थम् इव तत्रैव भूमौ शयनम् अकरोत् । वृक्षस्य च्छाया प्रायः तस्य प्रियः जातः ।

सण्डः भूमौ शयितः यत् तत्र योगिनः पात्रं किमपि न आसीत् । काकतालीयन्यायेन सः योगिनः समीपे शयितवान् आसीत् । किन्तु जनाः सण्डस्य शयनस्य, योगिनः श्रेष्ठतायाः च सम्बन्धं कल्पितवन्तः ।

कश्चित् अवदत् - ''एषः योगी न केवलं बधिरः मूकः च, अपि तु अन्धः अपि । अतः एव सः सण्डस्य आगमनसमये अपि तूष्णीं स्थितवान् आसीत्'' इति ।

तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

ममतापुरीनगरस्य सीमाप्रदेशे करुणानदी प्रवहति । तस्याः तीरे कश्चन महान् वटवृक्षः अस्ति । वटवृक्षस्य अधः, कश्चन योगी निवसति स्म । सः सदा मौनेन तिष्ठति स्म । कोऽपि किमपि पृच्छति चेत् उत्तरं न वदति स्म । यदि किमपि फलं दीयेत तर्हि सः सेवते स्म । जनाः चिन्तयन्ति स्म यत् सः मूकः बधिरः च इति ।

कदाचित् कश्चन सण्डः तं प्रदेशम् आगच्छत् । सः शृङ्गाभ्यां जनान् पीडयति स्म । अतः सर्वे तस्मात् भीताः । केचन तम् अनुसरन्तः ग्रहीतुं प्रयत्नं कृतवन्तः । सः सण्डः धावन् योगिसमीपम् एव आगतः । जनाः उच्चैः आक्रोशनं कृतवन्तः - ''योगिमहाराज !

तदा अपरः अवदत् - ''अये, एतादृशं मूर्खतापूर्णं वचनं पुनः न वदतु । महात्मनः विषये एतादृशस्य कथनम् अपराधाय । योगिनः माहात्म्यकारणतः एव दृप्तः अपि सण्डः तस्य पुरतः शान्ततया अतिष्ठत्'' इति ।

''योगी अपूर्वशक्तिशाली अस्ति । सः नगरसमीपे यत् तिष्ठति तत् नगरजनानां श्रेयसे एव'' इति केचन उक्तवन्तः । एवं विविधैः प्रकारैः योगिनः माहात्म्यकथाः प्रसृताः ।

एतस्य कारणतः योगिनः दर्शनार्थम् आगन्तृणां सङ्ख्या दिने दिने प्रवृद्धा । आगन्तारः आत्मना सह फलादिकं किमपि आनयन्ति स्म एव । किन्तु योगी तानि स्वनिमित्तं न रक्षति स्म । भक्तेभ्यः एव वितरति स्म सः । अतः योगिनः त्यागगुणः अपि जनानां

प्रशंसविषयः जातः । 'योगी नाम एतादृशः स्यात्' इति जनाः परस्परम् उक्तवन्तः ।

केचन योगिनं स्वसमस्यां निवेदयन्ति स्म । योगी तु किमपि न वदति स्म । समस्या-कथयितारः एव समस्यानिवेदनस्य अनन्तरम् – 'एवं करणं युक्तं स्यात् खलु?' 'तथा करणात् अस्माकं हितं सिध्येत् खलु?' इत्यादीनि वचनानि वदन्ति स्म ।

योगी जनानां कथनं शृणोति उत न इति न ज्ञायते स्म । क्वचित् सः अङ्गीकारपूर्वकं शिरः चालयति स्म इव, पुनः क्वचित् निराकरण-पूर्वकम् इव । मुनेः एकैकस्य सङ्केतस्य एकैकम् अर्थं कल्पयन्ति स्म जनाः । अतः सः 'सङ्केतयोगी' इत्येव प्रसिद्धिं गतः ।

न केवलं ममतापुरे, अपि तु तत्परिसरस्थेषु ग्रामेषु अपि योगिनः ख्यातिः प्रसृता । अतः मुनेः दर्शनाय असङ्ख्यानां जनानाम् आगमनम् आरब्धम् । अमूल्यानि उपायनानि अपि कैश्चित् अर्पितानि । यदा धनस्यापि आगमनं तत्र आरब्धं तदा केचन स्वार्थसाधकाः कश्चित् उपायं कृतवन्तः । वटवृक्षं परितः आवरणं कल्पयित्वा ते योगिनः दर्शनार्थम् आगन्तृभ्यः प्रवेशशुल्कस्य सङ्ग्रहणम् आरब्धवन्तः । 'योगिवर्यस्य अनुमतिं स्वीकृत्यैव वयं कार्य-प्रवृत्ताः स्मः । वयम् अत्र एकम् आश्रमं निर्मास्यामः' इति वदन्तः ते जनेभ्यः धनम् अपि सङ्गृहीतवन्तः । एवं सङ्गृहीतं धनं ते परस्परं विभज्य स्वीकुर्वन्ति स्म । रात्रौ द्वित्राः शुष्काः रोटिकाः प्राप्यन्ते स्म योगिना । तथापि योगी किमपि न वदति स्म । एवमेव दिनानि गतानि ।



राज्ञा कनकसेनेन कदाचित् एतस्य योगिनः वार्ता ज्ञाता । सः अन्धः, मूकः, बधिरः च स्यात् इति तेन श्रुतम् । 'स्वीकारम् अस्वीकारं च सः सङ्केतेन सूचयति । अप्रत्यक्षतया सः जनानां सेवां करोति' इति तेन ज्ञातम् । अतः योगिनः दर्शने राज्ञः इच्छा उत्पन्ना । अनन्तर-दिने एव रात्रौ सः वेषान्तरं धृत्वा योगिनं द्रष्टुं निर्गतवान् ।

यदा राजा आगतवान् तदा योगिनः पुरतः शुष्कं रोटिकाद्वयं दृश्यते स्म । अनतिदूरे कश्चन दीपदण्डः आसीत् । योगिनः नेत्राभ्याम् अश्रूणि निर्गच्छन्ति स्म । एतत् दृष्टवान् राजा अवगतवान् यत् एतस्य पूर्वजीवने काचित् विषादकरी घटना प्रवृत्ता स्यात् इति ।

अतः सः योगिनः समीपं गत्वा प्रणम्य – ''श्रीमन् ! अहम् एतस्य देशस्य राजा अस्मि ।



जनाः भवन्तम् अन्धं, मूकं, बधिरं च कथयन्ति । स्वचिन्तनस्तरस्य अनुगुणं चिन्तयन्ति ते । मम तु भासते यत् विकलाङ्गः न भवान्, अपि तु ते एव इति । अहं भवन्तं निवेदये यत् स्वविषये विस्तरेण वदतु इति'' इति विज्ञापितवान् ।

''महाराज ! भवतः वचनस्य श्रवणस्य अनन्तरम् अहं मौनव्रतस्य परित्यागे मतिं कृतवान् । यद्यपि भवता स्वविषये किमपि न उक्तं, तथापि भवतः कथनात् पूर्वम् एव मया ज्ञातं यत् भवान् महापुरुषः इति । सत्यस्य शक्ति : अनुपमा । तस्याः पुरतः असत्यं हतप्रभं भवति । सत्यस्य गोपनं च शक्यते । तत् स्वयं प्रकाशते'' इति अवदत् योगी ।

योगिनः कथनं श्रुत्वा महाराजः ज्ञातवान् यत् एषः असाधारणव्यक्तित्वशाली इति । अतः तस्य विषये महाराजस्य आदरः प्रवृद्धः ।

योगी पुनः अवदत् - ''महाराज ! चर्मचक्षुषोः अपि मनोनेत्रम् एव श्रेष्ठम् । बाह्यनेत्राभ्यां यत् दृश्यते तत् सत्यम् एव स्यादिति न नियमः । असत्यम् अपि सत्यत्वेन ज्ञापयेत् बाह्यदृष्टिः । मनोनेत्रबलात् एव वयं विषयस्य सत्यासत्यताम् अवगन्तुं शक्नुमः । यत् नेत्रयुगलं सत्यं न पश्यति तस्य उपयोगेन किम् इति मया चिन्तितम् । अतः बाह्यनेत्रयुगलेन दर्शनं स्थगितवान् अहम् । ताभ्यां दृष्टम् अपि मनसः स्पर्शं न करोति स्म । मनसः स्पर्शः भवति चेदपि तत् मनः न अङ्गीकरोति स्म । अतः चक्षुष्मान् अपि अहम् अन्धः इव एव आसम्'' इति ।

''महात्मन् ! जनाः भवन्तं न केवलम् अन्धम्, अपि तु बधिरं मूकं च भावयन्ति स्म । किमर्थं भवान् एवं व्यवहरति स्म ? तस्य किं कारणम् ?'' इति अपृच्छत् राजा ।

''सा च काचित् सुदीर्घकथा । मम पत्न्याः सहोदरः कश्चित् आसीत् । तस्मिन् मम पत्न्याः विशेषप्रीतिः,महान् आदरश्च । सः वाणिज्ये प्रवर्तमानः समग्रां सम्पत्तिं नाशितवान् । ऋणभारात् त्रस्तः आसीत् सः । सहोदरस्य एतां दुरवस्थां द्रष्टुं न शक्तवती मम पत्नी मां पुनः पुनः उक्तवती यत् एतद्विषये किमपि क्रियताम् इति । तदा अहं पञ्चएकरात्मिका या भूमिः मम आसीत् तस्याम् एकरद्वयमितां भूमिं न्यासीकृत्य धनम् आनीय श्यालाय दत्तवान् । श्यालः वचनं दत्तवान् यत् ऋणं प्रत्यर्प्य अवशिष्टेन धनेन नगरे वाणिज्यं कृत्वा भवतः धनं प्रत्यर्पयिष्यामि इति । किन्तु ततः एकं वर्षम् अतीतं चेदपि तस्य धनं न प्रत्यागतं,

सोऽपि न दृष्टः । एतदभ्यन्तरे तस्मै ऋणं दत्तवन्तः धनप्रत्यर्पणाय मम पीडनम् आरब्धवन्तः । अनन्यगतिकः अहं बन्धुभ्यः धनं प्राप्तुं प्रयत्नं कृतवान् । किन्तु कोऽपि बन्धुः धनं न दत्तवान् । सप्ताहं यावत् अटित्वा यावत् अहं निराशतया गृहं प्रत्यागतवान् तावता मम गृहस्य पुरतः ते ऋणदातारः उपविष्टाः आसन् । ग्रामप्रमुखादयः अपि तत्र आसन् । मां दृष्ट्वा ते उक्तवन्तः यत् पक्षाभ्यन्तरे ऋणं न प्रत्यर्पयिष्यते चेत् भवतः भूमिः, गृहम्, अन्या सम्पत्तिः च वशीकरिष्यते इति ।

अहं महता क्रोधेन अपमानभारेण च अन्तः आगतवान् । पत्नी मां किमपि वक्तुम् इच्छति स्म । किन्तु गृहस्य पुरतः एव जातात् अपमानात् नितरां खिन्नः क्रुद्धः च अहं पत्नीं, तदनुजं, तत्परिवारजनान् च निरन्तरं निन्दित-वान् । मम पत्नी रुदती गृहस्य पृष्ठभागं गतवती । अहं तस्याः विषये उपेक्षां प्रदर्शयन् मञ्चे उपविष्टवान् । तत्र एकं पत्रम् आसीत् । श्यालस्य पत्रं तत् । 'सप्ताहाभ्यन्तरे धनेन सह आगच्छन् अस्मि' इति लिखितवान् आसीत् सः । ...'' इति वदन् योगी अश्रूणि स्रावितवान् ।

''अग्रे तु भवतः पत्नी कूपे पतित्वा आत्महत्यया इहलोकव्यवहारं समापितवती । एवमेव खलु प्रवृत्तम्'' इति अपृच्छत् राजा ।

''आम् । एतस्मात् नितरां विषण्णः अहं गृहद्वारम् अपि अपिधाय ततः प्रस्थितवान् । सर्वत्र अटित्वा अन्ते एतत् स्थानम् आगत-वान् । अत्रैव ध्यानार्थम् अहम् उपविष्टवान् । न आसीत् श्रवणं, न वा कथनम् । अतः जनाः मां मूकं बधिरं च भावितवन्तः'' इति अवदत् योगी ।

''महात्मन् ! भवान् महामहिमशाली,



अपूर्वशक्तिमान् च इति प्रचारः अस्ति । किम् एतत्सर्वं सत्यम् ?'' इति अपृच्छत् राजा ।

''केचन मूर्खाः स्वार्थपराः तथा प्रचारं कृतवन्तः । मम मौनव्रतस्य दुर्लाभप्राप्त्यर्थं ते तथा कुर्वन्तः सन्ति । एतस्य निवारणं कथम् इति अहम् अहोरात्रं चिन्तयामि । समस्यायाः परिहारमार्गः अद्यावधि न प्राप्तः मया'' इति खेदमिश्रितस्वरेण अवदत् योगी ।

अनन्तरदिने योगिनः दर्शनार्थं ये आगताः तैः महती निराशता प्राप्ता । यतः वटवृक्षस्य अधः योगी न आसीत् । तदनन्तरकाले केनापि सः न दृष्टः । एतस्य रहस्यं तु महाराजः एकः एव जानाति स्म । सः मौनयोगी एव तस्य आप्तसहायकः जातः आसीत् ।

वेतालः एवं कथां समाप्य अवदत् – ''बहूनि वर्षाणि यावत् सः योगी अन्धः इव, बधिरः इव, मूकः इव च व्यवहरति स्म । राज्ञः दर्शनात् किमर्थं तस्य नेत्राभ्याम् अश्रुधारा निर्गता ? योगी सन् सः जनानां सेवां करोति स्म निस्स्वार्थतया । सः किमर्थं राज्ञः आस्थानं प्रविष्टवान् ? अधःपतनं प्राप्तवान् खलु सः ? मम एतेषां प्रश्नानां समुचितम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् – ''राज्ञः प्रथमप्रश्नं श्रुत्वा एव योगी अवगतवान् यत् राजा विवेकी प्राज्ञश्च अस्ति इति । सः कस्यापि दुःखजननं न इच्छति स्म । स्वार्थसाधकानां व्यवहारं स्मरता तेन राज्ञः दर्शनसमनन्तरम् अश्रूणि पातितानि । एतत् दृष्ट्वा राजा अवगतवान् यत् अशान्तचित्तः एषः शान्तिम् अपेक्षते इति । राजा तान् स्वार्थपरान् दण्डयितुम् अशक्ष्यत् एव । किन्तु तावता समस्या परिहृता न स्यात् । अन्ये स्वार्थपराः आगत्य अपरं वञ्चनाजालं प्रसारयेयुः एव । अतः राजा योगिनं ततः नीत्वा आप्तसहायकं कृतवान् । एतस्मात् समाजहितविषयिणी योगिनः आस्था देशस्य उपकाराय जाता । योगिना अपि स्वार्थ-साधकानां पीडायाः अभावतः शान्तिः प्राप्ता । योगिनः भोगेच्छा अत्र अणुमात्रेणापि नास्ति'' इति ।

एवं वदता राज्ञा मौनव्रतस्य भङ्गः कृतः आसीत् । अतः वेतालः शवसहिततया अदृश्यः भूत्वा वृक्षशाखाम् अवलम्बितवान् ।



# देवमानवसहायकः ऋषिः



पूर्वं वृत्रासुरो नाम कश्चन दानवः आसीत् । तस्य प्रबला इच्छा आसीत् यत् अहं लोकत्रयस्य अपि प्रभुः भवेयम् इति । सः यदा देवलोकस्य उपरि आक्रमणं कृतवान् तदा देवदानवयोः घोरं युद्धं प्रवृत्तम् । एतस्मिन् युद्धे वृत्रासुरः संहृतः जातः । वृत्रासुरस्य मरणात् दानवपीडा स्थगिता भवेत् इति सर्वैः चिन्तितम् । किन्तु तथा न जातम् ।

'कालकेय'पदवाच्यः कश्चन राक्षसगणः वृत्रासुरे निष्ठावान् आसीत् । सः गणः मानवानां देवानां च पीडनम् अनुवर्तितवान् । नायके मृते अपि एते कथं सजीवं स्थातुं शक्ताः इति बहवः आश्चर्यम् अनुभूतवन्तः ।

यदा वृत्रासुरः मृतः तदा ते रणरङ्गतः पलायित-वन्तः । ते कुत्र गताः इति केनापि न ज्ञातम् । देवाः चिन्तितवन्तः यत् एते दूरपर्वतम् अरण्यं वा गताः स्युः, इतः परं कमपि न पीडयेयुः इति । किन्तु एतत् चिन्तनं वितथं जातम् । यतः कालकेयाः रात्रौ अकस्मात् आक्रमणं कृत्वा ग्रामान् गृहाणि च नाशयन्ति स्म । यज्ञानां, मुनीनां च नाशने ते विशेषरुचिं दर्शयन्ति स्म । परपीडनेन, जनसंहारेण च ते परमानन्दं प्राप्नुवन्ति स्म । ते देवान् नाशयितुं तु न शक्नुवन्ति स्म, किन्तु निरन्तरपीडनेन तान् व्यथयन्ति स्म ।

राजानः कालकेयानां पीडां निवारयितुं प्रयत्नं कृतवन्तः । किन्तु ते असफलाः । यतः कालकेयाः कदा कुतः आगत्य आक्रमणं



कुर्वन्ति इति न ज्ञायते स्म । यावत् जनाः तेषाम् आक्रमणम् अभिजानीयुः तावता जनानां गृहाणि दग्धानि भवन्ति स्म । अतः सम्भूय तेषां सम्मुखीकरणम् अशक्यम् आसीत् । कालकेयाः अट्टहासं कुर्वन्तः जनान् अनुसृत्य मारयन्ति स्म । केचन तादृशाः एव कालकेयानाम् आक्रमणतः आत्मानं रक्षितुं शक्नुवन्ति स्म, येषां च दैवबलं भवति स्म ।

सूर्योदयात् पूर्वं कालकेयाः अदृश्यतां गच्छन्ति स्म । राजा तेषाम् अन्वेषणाय सर्वत्र सैनिकान् नियोजितवान् । किन्तु तस्मात् किमपि न सिद्धम् ।

'किम् एते कालकेयाः वायौ उड्डीय अदृश्यतां गच्छन्ति ?' इति जनाः परस्परं वदन्ति स्म ।

अन्ते तेषां रहस्यस्य भेदनं कृतम् । ते समुद्रे निलीय तिष्ठन्ति इति ज्ञातम् । भूमिम् आगत्य सर्वविधं नाशकृत्यं समाप्य ते समुद्रं प्रविशन्ति स्म । समुद्रस्य अन्तः तैः वासगृहं निर्मितम् आसीत् ।

समुद्रः तु सुविशालः अतिगभीरः च । एतादृशे समुद्रे तेषां वासः कुत्र इति कथं ज्ञातुं शक्येत ?

''एतद्विषये अगस्त्यः एकः एव साहाय्यं कर्तुं समर्थः'' इति देवैः श्रुतम् । सः अगस्त्यः कः इति भवन्तः जानन्ति एव खलु ? तस्य विषये काचित् कथा एवं श्रूयते –

सः भारतस्य उत्तरभागतः दक्षिणभागम् आगतवान् विन्ध्यपर्वतश्रेणीम् अतिक्रम्य । एवम् आगमनस्य किञ्चन विशेषकारणम् आसीत् । विन्ध्यपर्वतः कदाचित् सूर्यविषये कुपितः जातः । अतः सः पूर्वदिक्तः पश्चिमाभिमुखं गच्छतः सूर्यस्य गतिम् अवरोद्धुम् इष्टवान् । तदर्थं सः आत्मानं क्षणे क्षणे वर्धितवान् । देवाः मुनयः च तं प्रार्थितवन्तः – एतां वृद्धिं परित्यजतु इति । किन्तु विन्ध्यः तेषां प्रार्थनां तृणीकृत्य वर्धमानः एव अतिष्ठत् ।

एषः विन्ध्यः अगस्त्यस्य शिष्यः आसीत् । देवाः प्रवृत्तं सर्वम् अगस्त्यं निवेद्य उक्तवन्तः – ''भवतः शिष्यः सूर्यचन्द्रयोः गतौ अपि अवरोधं जनयन् अस्ति । सूर्यचन्द्रयोः गतिः यथावत् यदि न भवति तर्हि जगत् एव विपर्यस्तं भवेत्'' इति ।

अगस्त्यः तान् किमपि अनुक्त्वा विन्ध्य-

पर्वतदिशि गतवान् । गुरोः आगमनं दृष्ट्वा विन्ध्यः शिरसः अवनमनं कृतवान् । ''यावत् अहं न प्रत्यागमिष्यामि तावत् भवता एवमेव स्थातव्यम्'' इति आज्ञापितवान् अगस्त्यः ।

विन्ध्यः गुरोः वचनं श्रद्धया पालितवान् । किन्तु दक्षिणभारतम् आगतः अगस्त्यः न प्रतिगतः एव । सः दक्षिणभारते एव वासम् अकरोत् । अतः अवनतशिरस्कः विन्ध्यः स्वशिरः उन्नेतुं न शक्तवान् । तस्मात् कारणात् सूर्यचन्द्रयोः गतौ आगतः विघ्नः अपगतः जातः ।

एतादृशस्य अगस्त्यस्य समीपं गत्वा देवाः उक्तवन्तः – ''कालकेयानां पीडातः अस्मान् रक्षतु'' इति । अगस्त्यः सर्वं श्रुत्वा समुद्रदिशि प्रस्थितवान् । देवाः, राजानः, अन्ये वीराः च तम् अनुसृतवन्तः । अगस्त्यः समुद्रतीरे स्थितवान् । अग्रे किं प्रवर्तेत इति कोऽपि न जानाति स्म ।

अगस्त्यः क्षणकालं ध्यानावस्थितः जातः । ततः सः स्वहस्तं चुलुकाकारेण कृत्वा अवनम्य चुलुके सागरं पूरितवान् । जनेषु पश्यत्सु एव विशालः अपि समुद्रः तस्य चुलुके अतिष्ठत् । अगस्त्यः चुलुकगतं सागरं पीतवान् । अतः क्षणाभ्यन्तरे सागरस्थले भूमिः दृष्टिगोचरतां गता । तदा जनैः कालकेयानां वसतिः दृष्टा । पुनः किं, देवाः सर्वे सम्भूय तान् कालकेयान् नाशितवन्तः ।

एतस्याः कथायाः सारं वयं वक्तुम् इच्छामः किञ्चित् । ये भारतीयपुराणकथाः पठित्वा तात्पर्यं विमृष्टवन्तः ते वदन्ति यत् एताः कथाः किमपि विशिष्टम् अर्थं सङ्केतयन्ति इति । प्रज्ञावस्था समुद्रं सङ्केतयति । अगस्त्यस्य सागरपानं, तद्द्वारा राक्षसानां संहारश्च सङ्केतयति यत् प्रज्ञावस्थाप्राप्तौ स्थितानां विघ्नानां निवारणं करणीयम् इति । एतस्मात् कथनात् भवन्तः कथायाः आन्तर्यम् अवगतवन्तः स्युः खलु ? यदि सूक्ष्मेक्षिकया अवलोक्यते तर्हि एतस्याः, एतादृशीनाम् अन्यकथानां च पृष्ठभूमिकायां निहितं तत्त्वम् अवश्यम् अवगम्येत ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

विद्यालयेषु भवन्तः भारतस्य इतिहासं भूगोलशास्त्रं च पठन्ति । तत्र इतिहासः भवद्भिः आधिक्येन स्मर्येत । कथारूपेण उक्तः तु अवश्यं स्मर्येत । एतस्य मासस्य प्रश्नावली अधीतं भूगोलशास्त्रं स्मारयन्ती तदतिरिक्तान् अंशान् अपि ज्ञापयति । अतः प्रश्नान् परिशीलयन्तु तावत् –

१. ईशान्यदिशि स्थितायाः पर्वतश्रेण्याः अवयवार्थः भवति – 'सर्पाणाम् आवासस्थानम्' इति । तस्याः पर्वतश्रेण्याः नाम किम् ?
२. कस्याः नद्याः मध्ये द्वीपरूपि श्रीरङ्गपत्तनम् अस्ति ?
३. ओरिस्साराज्ये 'पायिण्ट् पाल्मैरास्' यस्याः नद्याः मुखभागे अस्ति, तस्याः नाम किम् ?
४. कस्मिन् राज्ये अतिविशालः अन्तःप्रदेशीयः जलमार्गः अस्ति ?
५. 'स्फिटि'खाते स्थितः कः ग्रामः जगति अत्युन्नते स्थले स्थितत्वेन परिगण्यते ? तस्य औन्नत्यं कियत् ?
६. केरलराज्ये पम्ब-पेरियार्-मरिमाल-नद्यः केन सरोवरेण मिलन्ति ?
७. महाराष्ट्रराज्यस्य किं नगरं 'पश्चिमघट्टीयम् अत्युन्नतं पर्वतकेन्द्रम्' इति परिगण्यते ?
८. भारतस्य अत्युन्नतः जलपातः 'जोग'नामकः कया नद्या निर्मितः ?
९. बुन्दिदुर्गे स्थिते कृत्रिमसरोवरे वरुणदेवस्य मन्दिरस्य अर्धभागः जलावृतः अस्ति । तस्य सरोवरस्य नाम किम् ?
१०. विन्ध्याः मध्यप्रदेशस्य कस्मैचित् रजपूतवंशाय स्वनाम दत्तवन्तः । तस्याः जनजातेः (वंशस्य) नाम किम् ?

*(उत्तराणि अग्रिमे मासे)*

### 'मे'मासस्य प्रश्नानाम् उत्तराणि

१. बहमनीसंस्थानम् इति । सुल्तान् अलौन्द-दीन् । १३४७ तमे वर्षे ।
२. 'दि टेन् डिग्री चानल्' इति । तौ च द्वीपौ अण्डमान्-निकोबार्नामकौ ।
३. 'कटक्' इति ।
४. मुम्बयीनगरे । (पूर्वं तस्य नाम आसीत् 'बाम्बे')
५. देहलीनगरस्य ।
६. कल्कत्तानगरस्य (अद्य तस्य नाम 'कोल्कता')
७. मधुरै इति । नद्याः नाम 'वैगै' इति ।
८. 'पाम्बन्'जलसन्धिः ।



# पिशाचस्य अनुग्रहः

कमलाकरः सपरिवारं रामपुरे निवसति स्म । तस्य ग्रामस्य पार्श्वे एव घनारण्यम् आसीत् । अरण्यप्रदेशस्य अपरभागे नगरम् आसीत् । तत्र कमलाकरस्य नारिकेलापणः आसीत् ।

कदाचित् आपणं पिधाय प्रत्यागमनसमये महान् विलम्बः जातः । अतः कमलाकरः निश्चितवान् यत् मुख्यमार्गेण अगत्वा समीपतरेण पादमार्गेण गृहं प्राप्तव्यम् इति । अतः सः समीपतरमार्गम् अवलम्बितवान् । किन्तु किञ्चिद्दूरं यदा गतं तदा महती वृष्टिः आरब्धा । तस्मिन् एव समये तेन अनतिदूरे कश्चन जीर्णः शिवालयः दृष्टः । सः धावन् गत्वा शिवालयं प्रविष्टवान् ।

शिवालयः जीर्णः आसीत् । तस्य भित्त्यादिषु तृणसस्यादयः प्रवृद्धाः आसन् । एतत्सर्वं दृष्ट्वा कमलाकरः अचिन्तयत् – 'अत्र सर्पवृश्चिकादयः अपि स्युः । ते मां दशेयुः कदाचित् । अतः वृष्टौ अपि गमनम् एव वरम्' इति ।

अरण्ये सर्वत्र अन्धकारः आसीत् । किन्तु दूरे वृक्षाणां मध्ये काचित् प्रकाशरेखा दृश्यते स्म । कमलाकरः तस्यां दिशि वेगेन पदानि स्थापितवान् । तत्र गमनात् तेन ज्ञातं यत् प्रकाशः कस्यचित् दीपदण्डस्य इति । तं दीपदण्डं गृहीत्वा कश्चन वृद्धः पिशाचः शिलायाः उपरि उपविष्टः आसीत् ।

पिशाचं दृष्ट्वा कमलाकरः नितरां भीतः । सः परिवृत्य यावत् ततः धावितुम् ऐच्छत् तावता पिशाचः उच्चस्वरेण – ''भोः, अलं भीत्या । समीपम् आगच्छतु तावत् । किं मार्गभ्रष्टः भवान् ? कुत्र गन्तव्यं भवता ? रामपुरं प्रति, उत भरतपुरं प्रति ? यदि रामपुरं प्रति गन्तव्यं तर्हि वामतः गच्छतु, भरतपुरं प्रति चेत् दक्षिणमार्गम् अनुसरतु'' इति वदन् दीपदण्डम् इतस्ततः चालयन् उभयमार्गम् अपि



अदर्शयत् ।

पिशाचस्य मधुरस्वरं श्रुतवति कमलाकरे धैर्यम् आगतम् । सः पिशाचम् अपृच्छत् - ''मध्यरात्रसमयः स्यात् एषः । दीपदण्डं धृत्वा किमर्थम् उपविष्टः अस्ति भवान् ?'' इति ।

तदा पिशाचः अवदत् - ''पुण्यस्य सम्पादनार्थम् । यदा अहं मानवरूपेण आसं तदा महाधनिकः आसम् । तदवसरे मया स्वार्थमात्रं चिन्तितं, न तु परोपकारः । अतः अहं पिशाचः अभवम् । एतस्मिन् काले वा यदि परोपकारं कुर्यां तर्हि पुण्यं प्राप्येत, गच्छता कालेन पिशाचजन्मनः मुक्तिश्च लभ्येत इति चिन्तनं मम । रात्रौ मार्गभ्रष्टानां जनानां साहाय्यं कृतं चेत् पुण्यं प्राप्येत एव खलु ?'' इति ।

तत् श्रुत्वा कमलाकरः अवदत् - ''एतादृशैः कार्यैः कियत् पुण्यं प्राप्येत ? महोपकारः कृतः चेत् एव खलु महत् पुण्यं प्राप्येत ? अतः भवान् मम गृहे सुवर्णवृष्टिं करोतु । ततः राशिरूपेण पुण्यं च प्राप्नोतु'' इति ।

तदा पिशाचः अवदत् - ''स्वार्थपूर्णायाः इच्छायाः पूर्तिः मया न क्रियते । अतः अन्यत् किमपि याचताम्'' इति ।

तत् श्रुत्वा कमलाकरः असन्तोषेण - ''एवं तर्हि मम प्रतिवेशिनः मङ्गलस्य गृहे सुवर्णवृष्टिं करोतु । सः महादरिद्रः अस्ति'' इति अवदत् ।

''अस्तु, तदेव करोमि । महत्यां वृष्ट्याम् अपि मम दीपदण्डः प्रकाशते । एतस्मात् एव मम सामर्थ्यं ज्ञायते । तथापि मम शक्तिविषये भवतः सन्देहः इति भाति मम । भवान् गृहं गत्वा मङ्गलं वदतु यत् गृहस्य पृष्ठभागे यः नारिकेलवृक्षः अस्ति तस्य मूले खननं करणीयम् इति । तस्मात् तेन सुवर्णं प्राप्यते । किन्तु अत्र स्मर्तव्यं यत् यः एतदर्थम् अपात्रं तेन खननं कृतं चेत् सर्पाः दृश्यन्ते तत्र'' इति अवदत् पिशाचः ।

ततः गृहं गतः कमलाकरः पत्नीं प्रवृत्तं सर्वं निवेद्य - ''अहो, मङ्गलस्य एव सौभाग्यम् !'' इति अवदत् ।

तदा तस्य पत्नी दुर्गा उक्तवती - ''भवान् सर्वथा अविवेकी । इदानीम् एव मङ्गलं वदतु यत् भवता अरण्यं गत्वा पिशाचेन मेलितव्यम् इति । अस्माकं गृहे धनं यथा प्राप्येत तथा वरं याचेत् सः । तदा वयम् अपि धनिकाः स्याम'' इति ।

कमलाकरः पत्न्याः सूचनानुगुणम् एव कृत-

वान् । मङ्गलः अरण्यं गत्वा पिशाचेन मिलित्वा प्रत्यागत्य कमलाकरम् अवदत् - ''भवतः गृहस्य पाकशालायाः द्वारं भञ्जितं चेत् सुवर्णराशिः प्राप्यते इति पिशाचेन उक्तम्'' इति ।

''भवतु । भवान् स्वगृहस्य पृष्ठतः स्थितस्य नारिकेलवृक्षस्य मूले खननं करोतु । तेन सुवर्णं प्राप्यते'' इति मङ्गलम् अवदत् कमलाकरः ।

ततः सः पत्न्याः साहाय्येन पाकशालायाः द्वारम् अपनीतवान् । तदीयं गृहं प्राचीनम् आसीत् । अतः एकस्य द्वारस्य अपनयनतः तस्यां दिशि तत् वलितं जातम् । द्वारप्रदेशात् सर्पवृश्चिकादयः निर्गताः ।

एतत् दृष्ट्वा कमलाकरः नितरां कुपितः । सः पिशाचेन मेलितुम् अरण्यं गतवान् । किन्तु पिशाचः तेन कुत्रापि न दृष्टः । सर्वत्र अन्विष्यन्तं तं शिवालये स्थितः कश्चन संन्यासी अवदत् - ''वत्स ! भवान् पिशाचस्य अन्वेषणं कुर्वन् स्यात् खलु ? 'मनुष्याः यत्र न दृश्येरन् तत्र वसन् भवान् भगवतः ध्यानं करोतु । ततः पुण्यं प्राप्यते' इति उक्त्वा अहं तं प्रेषितवान् अस्मि । किं पिशाचात् किमपि अपेक्षते स्म भवान् ?'' इति ।

कमलाकरः प्रवृत्तं सर्वं निवेद्य उक्तवान् - ''पिशाचः माम् अवञ्चयत् । मङ्गलाय मया सुवर्णं प्रार्थितम् । तत् तेन प्राप्तम् । मङ्गलः मदर्थम् ऐश्वर्यं प्रार्थितवान् । मया तु सर्पाः प्राप्ताः । मम गृहं पतनस्थितौ अस्ति अपि'' इति ।

तदा संन्यासी हसन् उक्तवान् - ''वत्स ! अत्र पिशाचस्य न कोऽपि दोषः । स्वार्थः न याचनीयः इति तेन उक्तम् आसीत् एव । मङ्गलाय भवान् सुवर्णं यत् याचितवान् तत्र स्वार्थलेपः न आसीत् । अतः तेन सुवर्णं प्राप्तम् । मङ्गलः भवदर्थं लक्ष्मीं याचितवान् भवतः कथनस्य अनुगुणम् । एतत् स्वार्थ-प्रेरितम् आसीत् । अतः भवता सर्प-वृश्चिकादयः दृष्टाः'' इति ।

एतस्मात् कमलाकरेण विवेकः प्राप्तः । 'यस्य ललाटे यत् लिखितं तदेव प्राप्यते तत्तज्जनेन । परिश्रमकरणम् एव मम ललाटे लिखितम् । मया अत्याशा न करणीया' इति चिन्तयन् सः गृहं प्रतिगतवान् ।



# बुद्धिमान् गोपालबन्धुः



मोनीवर्यः कृष्णनगरे स्थितः कश्चन महाधनिकः । किन्तु सः स्वभावेन महाकृपणः । सः कदापि शिरसि तैलं न स्थापयति स्म । अतः सः विकीर्णकेशः भवति स्म सदापि । सः यां वेष्टीं धरति स्म सा प्रायः सप्ताहे एकवारं क्षाल्यते स्म । अतः सदा सः मलिनः दृश्यते स्म । कोऽपि तस्य मैत्रीं न इच्छति स्म ।

स च पर्वकालः । बालानां कश्चन गणः धनसाहाय्यार्थं मोनीसमीपं गतः । "किं स्फोटकक्रयणाय धनम् इष्यते ? स्फोटकदाहेन धनं व्यर्थीक्रियते भवद्भिः । अतः किमपि न दीयते भवद्भ्यः । इतः निर्गम्यताम्" इति क्रोधेन अवदत् मोनीवर्यः ।





ततः प्रत्यागच्छन्तः बालाः गोपालबन्धुना मिलिताः । ते मोनीगृहे प्रवृत्तं समग्रं तं निवेदितवन्तः । "एतस्मिन् वसतिप्रदेशे वसन्तः सर्वेऽपि धनं दत्तवन्तः, ऋते मोनीवर्यात् । पञ्चाशत् रूप्यकाणि वा दद्यात् सः इति आशा आसीत् अस्माकम्" इति उक्तवन्तः ते ।

"मोनीवर्यः महाकृपणः इति किं न जानन्ति भवन्तः ? तथापि अलं चिन्तया । अद्य सायम् आगच्छन्तु भवन्तः । तदा अहं मोनीवर्यात् शतं रूप्यकाणि दापयिष्यामि" इति अवदत् गोपालबन्धुः । सः मोनीवर्यम् एतदवसरे योग्यां नीतिं बोधयितुम् इच्छति स्म ।





यदा सः तत्र गतः तदा मोनीवर्यः वाटिकायां शाकसङ्ग्रहणे निरतः आसीत् । गोपालस्य आगमनं दृष्ट्वा मोनीवर्यः अवदत् - ''मध्याह्नकाले मम उपवासः । रात्रौ एव मया शाकाः उपयुज्यन्ते'' इति । ''एतेन भवान् शाकसञ्चयं कुर्यात् । किन्तु अपरत्र भवता महत् धनं व्यर्थीक्रियते'' इति अवदत् गोपालः ।



''मया कुत्र धनं व्यर्थीक्रियते ?'' - आश्चर्येण पृष्टवान् मोनीवर्यः । ''रात्रौ अतिथिभिः सह सम्भाषणावसरे दीपस्य का अवश्यकता ?'' ''युक्तम् एतत् ! सम्भाषणावसरे परस्पर-दर्शनस्य आवश्यकता नास्ति ।'' ''एवमेव अन्धकारे वस्त्रधरणम् अपि व्यर्थम् एव । अन्धकारे को वा पश्येत् ?'' गोपालः अवदत् ।



''भवान् एकेन नेत्रेण द्रष्टुं किं न शक्नोति ?'' - गोपालः अपृच्छत् । ''शक्नोमि एव'' इति अवदत् मोनीवर्यः । ''एवं तर्हि उभयोः नेत्रयोः उपनेत्रधारणं व्यर्थं खलु ?'' इति अपृच्छत् गोपालः । 'व्यर्थाव्यर्थतां वदन् एषः किमपि ज्ञापयितुम् इच्छति' इति अवगतवान् मोनीवर्यः ।



''भवतः कथनस्य किं तात्पर्यम् ?' इति अपृच्छत् मोनीवर्यः । ''जीवने वयं यद्यत् कुर्मः तत्र सर्वत्र धनस्य व्यर्थता भवति । पर्वाचरणाय बालेभ्यः किञ्चित् दत्तं चेत् ते ततः सन्तोषम् अनुभवन्ति । अतः एतादृशं धनदानं न व्यर्थम्'' इति अवदत् गोपालः । इतः विवेकं प्राप्तवान् मोनीवर्यः बालेभ्यः शतं रूप्यकाणि दत्तवान् ।



# कोण्डपल्लीयानि क्रीडनकानि



यदि भवन्तः तिरुपति-समीपस्थं तिरुचानूरुं कदाचित् गच्छेयुः तर्हि ततः साम्प्रदायिक्या शैल्या निर्मितानां काष्ठमयानां क्रीडनकानाम् आनयनं मा विस्मरन्तु । आन्ध्रप्रदेशे तिरुचानूरु, निर्मल्, एटिकोयपक्क, कोण्डपल्लि इत्यादिषु प्रदेशेषु यानि क्रीडनकानि निर्मीयन्ते तानि अतीवजनप्रियाणि सन्ति । तत्रापि कोण्डपल्लीयानां जनप्रियता अधिका । एतानि पोन्निकि-काष्ठेन निर्मीयन्ते । तत् काष्ठं मृदु । तच्च पूर्वोक्तानां ग्रामाणां परिसरे आधिक्येन प्राप्यन्ते ।

कोण्डपल्लीयानि क्रीडनकानि आर्य-क्षत्रियजातीयैः जनैः निर्मीयन्ते आधिक्येन । परम्पराप्राप्ता कुलविद्या एषा तेषाम् ।

एतानि क्रीडनकानि पुराणव्यक्तीः, घटनाः, ग्राम्यविषयान् वा अवलम्ब्य रचितानि भवन्ति । तन्तुवायाः, रजकाः, अहितुण्डिकाः, वणिजः इत्यादीनां; मयूर-उष्ट्र-वराह-अश्व-गज-व्याघ्रादीनां च आकाराः क्रीडनकेषु दृश्यन्ते प्रायः ।

पूर्वं शिलाचूर्ण-वृक्षचूर्ण-वृक्षमूल-निर्यासादिभिः निर्मिताः वर्णाः क्रीडनकानां निर्माणे उपयुज्यन्ते स्म । एषु दिनेषु तु रासायनिकवर्णाः उपयुज्यन्ते प्रायः ।

कोण्डपल्लीयानि क्रीडनकानि भवताम् अलङ्कारवस्त्वाधानिकाम् अलङ्कर्तुम् अर्हन्ति । नवरात्रोत्सवे दीपावल्यवसरे वा यत् पाञ्चालिकास्थापनं क्रियते तदा वा तानि उपयोक्तुम् अर्हन्ति भवन्तः ।





चन्दमामया प्रस्तूयमाना

# वसुधा



*In collaboration with*
KALPAVRIKSH
& NBSAP



**Sponsored by National Foundation for India**

# न्याषनल् फौण्डेषन् आफ् इण्डिया (एन्.एफ्.ऐ.)

सामाजिकतया अनभिवृद्धानाम् अभिवृद्ध्यर्थं सहायधनदात्री स्वायत्तसंस्था अस्ति एन्.एफ्.ऐ. । समाजस्य सर्वस्तरीयाः अपि जनाः गौरवान्वितं जीवनं यापयितुं यम् अधिकारम् अर्हन्ति तम् एषा पुरस्करोति । एषा व्यक्तीनां समुदायस्य च सामर्थ्यस्य वर्धनार्थं, जीवनस्तरस्य अभिवृद्ध्यर्थं, सामाजिकावरोधान् अपाकर्तुं च साहाय्यं करोति ।

## अस्माकं कार्यक्रमाः

**स्त्रीपुरुषसमानता न्यायश्च** – स्त्र्यपत्यस्य अधिकारः, स्त्रीभ्रूणहत्या, स्त्रीपुरुषसामाजिकासमानता, न्यायः इत्यादीन् अधिकृत्य यथायोग्यं विषयज्ञापनम्, एतत्सम्बद्धसंस्था-सर्वकारादिभिः विषयेऽस्मिन् करणीयानां कार्याणां ज्ञापनम् अनुरोधः च ।

**सार्वजनिकव्यवहारः नगरशासनं च** – एषा योजना शासनव्यवस्थायाः तम् अंशम् उद्दिश्य कार्यं करोति, यश्च शासने भागग्रहणपुरस्सरं मानवसम्पदं वर्धयति, अधिकाधिकारदानपुरस्सरम् अधिकार-विकेन्द्रीकरणं सम्पादयति, पारदर्शकताम् उत्तरदायित्वं च आनयति, दारिद्र्यं च अपनयति । एन्. एफ्. ऐ. निश्चितकार्याणाम् अध्ययनं, चितानां प्रतिनिधीनां शिक्षणम्, एतत्क्षेत्रे विशेषसेवां कृतवतां सम्माननं च करोति ।

**प्रादेशिकासमतायाः निवारणम्** – ईशान्यराज्येषु दृश्यमानायाः सामाजिकार्थिक-असमतायाः कारणतः स्थानीयस्वयंसेविसंस्थानां सहयोगेन, स्त्रीपुरुषासमतानिवारण-जीवननिर्वहण-परिसरसंरक्षणादिक्षेत्रेषु कार्यं निर्वहति एन्. एफ्. ऐ. । स्वयंसेविस्थानां कार्यक्षेत्रे अपेक्षितानाम् अंशानाम् आदानप्रदानम्, शोध-प्राप्तांशोल्लेखनादिषु साहाय्यं चापि विदधाति ।

**अभिवृद्धिविषये साहाय्यम्** – यत् सामाजिकाभिवृद्धिकार्यं प्रचलति तत्र आधुनिकतन्त्रज्ञानस्य संयोजनेन बलवत्तासम्पादनाय अभिवृद्धिसंवादकार्यक्रमान् आयोजयति एन्.एफ्.ऐ. । अस्मत्संस्थायाः ये अभिवृद्धिसंवादकार्यक्रमाः सन्ति तत्सदृशकार्यक्रमाणां विकासाय उपकरोति एषः कार्यक्रमः । अभिवृद्धिकार्यक्रमान् अधिकृत्य लेखनसंशोधनादिनिमित्तं पत्रकारेभ्यः माध्यमसाहाय्यं ददती, ईशान्यराज्यानां विषये प्राप्तांशविनिमयकार्यक्रमान् आयोजयति एन्. एफ्. ऐ. ।

**एन्.एफ्.ऐ.निधिः** – ब्रिटन्देशस्य CIVA नामिकायाः संस्थायाः, 'OXFAM' संस्थायाश्च सहभागित्वेन निधिस्थापनयोजना आरब्धा अस्ति । आरोग्यक्षेत्रे, समाजसेवाक्षेत्रे च ये कार्यं कुर्वन्ति तेभ्यः साहाय्यधनं ददाति एन्. एफ्. ऐ. ।

# प्रियमित्राणि ,



प्रतिवर्षं जून्मासस्य पञ्चमे दिनाङ्के जागतिकपरिसरदिनं यत् आचर्यते तस्मिन् दिने वयं चर्चयामः यत् वृक्षाणां वन्यजीविनां च रक्षणं कियत् प्रमुखम् इति । किन्तु अनन्तरकाले तत्सर्वं विस्मरामः । एतस्मिन् वर्षे तस्मात् भिन्नं किमपि करणीयम् इत्यस्ति अस्माकं सङ्कल्पः । एतदवसरे वयं सस्यानां, पशूनां, सागरवासिनां, सूक्ष्मजीविनां, मानवानां च जीवनस्य तत्परिसरस्य च रमणीयं वैविध्यमयं कञ्चित् स्थूलपरिचयं प्राप्नुयाम ।

तादृशस्य समृद्धजीवनस्य एकं स्थूलं परिचयं दातुं चन्दमामया प्रकाश्यते *'वसुधा'*। एषा जीववैध्यविषयिणी विशेषसञ्चिका । *वसुधायाः* प्रायोजकत्वं तु भारतराष्ट्रियसंस्थानस्य (एन्.एफ्.ऐ.)। परिसरसम्बद्धकार्यं कुर्वत्या 'कल्पवृक्ष'संस्थया, 'नेषनल् बयोडैवर्सिटी स्ट्रटजी एण्ड् एक्शन् प्लान्' इत्येतया च विषयसज्जा कृता अस्ति ।

जीववैविध्यं नाम किं, तस्य संरक्षणं किमर्थं करणीयम् इत्यादिकं विवृणोति *वसुधा* । *वसुधा* विरलभ्यान् कांश्चन पशुप्रकारान्, वृक्षप्रकारान्, कानिचन धान्यवैविध्यानि च परि-चाययति । जीववैविध्यस्य संरक्षणे के विशेषप्रयासं कृतवन्तः इत्येतम् अंशम् अपि स्थूलतया ज्ञापयति सा ।

किन्तु *वसुधा* न विस्तृतपरिचये समर्था । पुटपरिमितेः कारणतः जीववैविध्यस्य सर्वविधमुखानि परिचाययितुं न शक्तम् अत्र । अस्माकं जलसम्पत्तेः जीवनगाथाम्, एतत्सदृशान् अन्यविषयान् च ज्ञातुम् अपरा एव विस्तृता सञ्चिका प्रकाशनीया भवेत् । *वसुधा* तु तादृशस्य पात्रस्य निर्वहणे असमर्था । जीववैविध्यविषये आसक्तेः उत्पादनं, निसर्गप्रीतेः जागरणं च एव अस्माकम् उद्देशः । जागतिकपरिसरदिने प्रबन्धलेखनमात्रं भाषणदानमात्रं वा न भवेत्, प्रत्युत सर्वजीविनां विषये आस्था, तेषां विषये अर्थकरी काचित् क्रिया च स्यात् इत्यस्ति अस्माकम् इच्छा । एतावत् तु स्मरन्तु - बिन्दुभिः एव निर्मीयते सिन्धुः इति ।

इति भवतीयः

विश्वम्

*सम्पादकः, चन्दमामा*

***तान्त्रिकमार्गदर्शनम् -***

**कल्पवृक्षः/एन्.बि.एस्.ए.पि.**

Address : Apt.5, Shri Dutta Krupa,
908, Deccan Gymkhana
Pune - 411004, India. Tel/Fax : 020-5654239
E-mail : kalpavriksh@vsnl.net

## जीववैविध्यं सर्वकाराः च

सस्यसङ्कुलस्य प्राणिसङ्कुलस्य च रक्षणं केन्द्रसर्वकारस्य राज्यसर्वकारस्य च दायित्वम् । तदर्थं तादृशानि स्थानानि चित्वा 'राष्ट्रियोद्यानानि' इति, 'अभयारण्यानि' इति वा घोषणा करणीया भवेत् । एतेन तत्र मानवानां प्रवेशः निषिद्धः भवति, प्राणिनः च तत्र शान्त्या स्थातुं शक्नुवन्ति । भारते इदानीं सार्धपञ्चशताधिकानि (५५०) तादृशानि स्थानानि सन्ति, येषां च संहतिः भारतस्य पञ्चमांशतां (५%) प्राप्नुयात् । वन्यजीविनां सुरक्षानियमानुसारम् अस्मिन् प्रदेशे मृगयायाः निषेधः कृतः अस्ति । सस्यकुलस्य संरक्षणदृष्ट्या बीजसंग्रहणागाराणि, संस्कारितबीजकेन्द्राणि च स्थापितानि सन्ति देशे । एतेन उत्तमफलं प्राप्तुम् अवकाशः कल्पितः भवति । एतादृशेषु प्रयत्नेषु सत्सु अपि कतिचन सस्यानि, केचन प्राणिनः च विनाशदशाम् आपन्नाः सन्ति । जीववैविध्यस्य संरक्षणार्थं सर्वैः सर्वकाराय सहयोगः दातव्यः । भवन्तः अपि सहकर्तुम् इच्छन्ति किम् ? यदि इच्छन्ति तर्हि समीपस्थं संरक्षितं स्थानम् अभिजानन्तु, कथं सहयोगः दातुं शक्यः इति चिन्तयन्तु च ।

Designed and produced by Chandamama India Ltd., 82 Defence Officers Colony
Ekkatuthangal, Chennai - 600 097. Phone : 234 7384, 234 7399. Website : www.chandamama.org.

# लघुजीविनः महाजीविनः च

भवन्तः कतीनां प्राणिनां सस्यानां च नामानि जानन्ति ? दश ? अथवा पञ्चाशत् ? यदि पञ्चाशदधिकानि नामानि वक्तुं समर्थाः तर्हि भवन्तः महाबुद्धिमन्तः एव ! ये बालाः भारतस्य अरण्येषु समुद्रतीरेषु च निवसन्ति ते शताधिकानि, कदाचित् सहस्राधिकानि वा नामानि जानन्ति । अन्यः विशेषः नाम ते बालाः कदापि विद्यालयं गतवन्तः न भवन्ति प्रायः ।

तदस्तु तावत्, किञ्चित् प्रयत्नं कुर्वन्तु । भवन्तः कतिविधतण्डुलान्, गोधूमान्, जूर्णान् वा जानन्ति ? द्विविधान् ? पञ्चविधान् ? यदि दशाधिकविधान् जानन्ति तर्हि भवन्तः पूजार्हाः एव । किन्तु, मणिपुरे, केरले, छत्तीसगढे वा वसन् ग्रामीणः कश्चित् बालकः पञ्चाशदधिकानि (ततोऽपि अधिकानि वा) नामानि वक्तुं समर्थः भवति ।

भारते एव १२५,००० विधाः प्राणिनः सन्ति इति भवन्तः किं जानन्ति ? ततोऽपि अधिकाः सूक्ष्मजीविनः (यान् वयं नेत्राभ्यां द्रष्टुं न शक्नुमः) सन्ति, येषां विषये इतोऽपि संशोधनं प्रचलत् अस्ति । भारतदेशस्तु जगतः कश्चन लघुः भागः । जगति ५,००,००० अधिकाः जीविनः भवितुम् अर्हन्ति । एतत् एव जीववैविध्यं नाम । एतस्य व्याप्तिः जैविकव्यवस्थाम् आश्रित्य तिष्ठति । तन्नाम अरण्यानि, सरोवराः, नद्यः, समुद्रतीराणि, समुद्राः, पर्वताः, शाद्वलानि, मरुस्थलानि इत्यादीनि आश्रित्य एतत् तिष्ठति ।

एतत् जीववैविध्यम् इदानीं नाश्यमानम् अस्ति । प्राणिनः, प्राणिनां स्थानानि वा नाशयन्तः सन्ति जनाः । सस्यानि उन्मूल्यमानानि सन्ति । तत्परिणामतः परिसरमालिन्यस्य दुष्परिणामः जीविनः (अस्मान् अपि !) बाधमानः अस्ति । भवन्तः यदा भवतां पितामहवयस्काः भविष्यन्ति तदा एतस्य जीववैविध्यस्य चतुर्थांशः नष्टप्रायः स्यात् । के तान् नाशयन्तः सन्ति ? निश्चयेन वयम् एव ! अस्माकम्



उद्यमाः, नगराणि, प्लास्टिक् इत्यादयः; कागदस्य अधिकाधिकः उपयोगः, खाद्यानि, विद्युत् इत्यादीनि सर्वाणि तस्य नाशकारणानि एव । एतानि सर्वाणि अपि परोक्षरूपेण नाशने कारणीभूतानि ।

कल्पनां कुर्वन्तु ! अस्मान् परितः केवलं मनुष्याः एव दृश्यन्ते चेत् कथं स्यात् ? नीरसताम् अनुभवेम खलु ! न केवलं तावत्, जीववैविध्यस्य आवश्यकता इतरत्र अपि भवति । भवद्भिः पीयमानं क्षीरं, ध्रियमाणानि कार्पासवस्त्राणि, खाद्यमानानि विभिन्नानि खाद्यानि, स्वीक्रियमाणानि कतिचन औषधानि, उपयुज्यमानं जलं, श्वासरूपेण सेव्यमानः प्राणवायुः इत्यादीनां अन्येषां च संयोगतः भूम्याः एतत् सङ्कीर्णं जीवजालं निर्मितम् अस्ति ।

एतस्य जीववैविध्यस्य संरक्षणार्थं किं भवन्तः यत्किञ्चित् कर्तुं सिद्धाः सन्ति ? बहवः बालाः 'राष्ट्रियजीववैविध्यसंरक्षणनीतिः, कार्याचरणं च' इत्येतस्यां योजनायां भागम् ऊढ्वा अस्मिन् कार्ये सहकुर्वन्तः सन्ति । अरण्यपरिसरविभागयोः मन्त्रालयेन, द्वाविंशतिवर्षेभ्यः परिसरसंरक्षणक्षेत्रे कार्यं कुर्वत्या 'कल्पवृक्ष'संस्थया च एषा योजना स्वीकृता अस्ति । जीवतान्त्रिकक्षेत्रे कार्यं कुर्वत्या बयोटेक् कन्सोर्टियम् इण्डिया लि. इत्येतया संस्थया एतस्याः योजनायाः निर्देशनं क्रियमाणम् अस्ति ।

अङ्गुलीभ्यां गृहीतायां मृत्तिकायां शतकोटिमिताः (बिलियन्) अणुजीविनः (ब्याक्टीरिया) भवन्ति इत्यत्र भवन्तः विश्वसन्ति किम् ? 'बिलियन्' इत्येतत् किम्परिमाणकम् इति किं भवन्तः जानन्ति ? यदि भवन्तः स्वलेखन्याः आवर्तनं बिलियन्परिमाणेन वर्धयेयुः तर्हि तत्र समग्रः प्रपञ्चः एव पूरयितुं शक्यः स्यात् ।

भारतस्य कः चतुष्पात्प्रकारः गतेषु शते वर्षेषु विनाशदशाम् गतः अस्ति ?

तरक्षुः (एसिनोनिक्स् जुबाटस्) । अधिकृतप्रमाणानि सूचयन्ति यत् भारते एतज्जातीयस्य अन्तिमदर्शनं १९४८ तमे वर्षे छत्तीसगढस्य बस्तरप्रदेशे जातम् इति ।

महाराष्ट्रस्य विदर्भभागे शालाबालकाः एकां प्रदर्शिनीम् आयोजितवन्तः आसन् । तस्मिन् सस्यजन्यपदार्थाः, कृष्यर्थम् उपयुज्यमानानि साधनानि, औषधीयगुणयुक्ताः दन्तकूर्चाः, रज्जवः इत्यादयः आसन् । देहलीस्थाः, चेन्नैस्थाः च विकलाङ्गबालाः कस्याञ्चित् कार्यशालायां भागम् ऊढ्वा निरूपितवन्तः यत् सर्वैः बालैः जीववैविध्यस्य कार्येऽस्मिन् सहयोगः दातुं शक्यः इति । कर्णाटके सर्वे छात्राः 'जीववैविध्य-मानचित्रनिर्माणे' भागं वहन्तः स्वग्रामे विद्यमानानां सस्यानां प्राणिनां च आवलीं कृत्वा सहयोगं कृतवन्तः ।

सहस्रशः जनाः एन्.बी.एस्.ए.पि.कार्ये भागं वहन्तः सन्ति । भारते यत् जीववैविध्यम् अवशिष्टम् अस्ति तस्य संरक्षणार्थं ते सर्वे योजनाः कुर्वन्तः सन्ति । निसर्गेण दत्तात् उपायनतः निरन्तरम् आनन्दं कथं स्वीकर्तुं शक्नुयाम इत्यपि चिन्तयन्तः सन्ति ते ।

भवन्तः अपि स्वपरिसरे स्थितस्य सस्यवर्गस्य प्राणिकुलस्य च संरक्षणम् इच्छन्ति खलु ?

*– सुजाता पद्मनाभन्,*
*आशीष कोठारी*

# चित्ताकर्षकः सस्यवर्गः !

एतानि चित्राणि परिशीलयन्तु । भारतस्य ४७०००विधेषु सस्येषु अत्र षड्विधानि एव विवृतानि सन्ति । अत्र दत्तानि सस्यचित्राणि, अधः दत्ता टिप्पणी च व्यत्यस्तानि सन्ति । टिप्पणीं सावधानतया पठन्तु । अधः उत्तराणि दत्तानि सन्ति । यदि समीचीनानि उत्तराणि स्वयं ज्ञायन्ते तर्हि भवन्तः भवन्ति प्रशंसार्हाः ।

**प्रवर्तन्तां सन्तोषेण !**



B

## कुसुम्भवृक्षः

*(स्क्लेकेरा ओलियोसा)*

बहूनां पुष्पवृक्षाणां मूलं भारतं न । तादृशवृक्षेषु पक्षिणः अन्ये जीविनः वा न निवसन्ति । किन्तु कुसुम्भजातीयः वृक्षः तावत् पूर्णतया भारतीयः । एषः वृक्षः मध्यमाकारः भवति । ग्रीष्मकालः यदा आरप्स्यते तदा एषः वृक्षः पर्णानि पातयति । एतस्य पर्णाणि गाढरक्तवर्णानि । अतः जनाः कदाचित् पर्णानि एव पुष्पाणि इति भावयन्ति । अतिप्राचीनानां वृक्षाणां काण्डेषु कोटराः भवन्ति । तत्र गृहगोधिकाः इतरे कीटादयः च वासं कुर्वन्ति । पक्षिणः चिक्रोडाः च एतस्य फलानि खादन्ति । एतस्य बीजैः तैलम् उत्पाद्यते । तत् तैलं केशानां कृते, मषकाणां निवारणार्थं च उपयोक्तुं शक्यम् । अतः भवन्तः पुनः यदा वृक्षारोपणं कर्तुम् इच्छन्ति तदा कुसुम्भवृक्षमेव आरोपयन्तु ।

A

## शिलावल्का *(लिचेन्)*

शिलावल्का अल्गे-शिलीन्ध्रनामकयोः सस्यवर्गयोः मिश्रणेन जातया जात्या युक्तं सस्यम् । अल्गेसस्यवर्गीयः भागः शीघ्रं शुष्कः भवति । किन्तु शिलीन्ध्रवर्गीयभागः शुष्कीभवनात् सस्यं रक्षति । अल्गेवर्गीयः भागः सूर्यप्रकाशद्वारा आहारोत्पादनं कृत्वा शक्तिम् उत्पाद्य सहवर्तिनः शिलीन्ध्रवर्गीयस्य साहाय्यं करोति । यतः पत्रहरितः अभावस्य कारणतः शिलीन्ध्रवर्गीयभागः स्वस्य आहारं स्वयम् उत्पादयितुम् असमर्थः । शिलावल्काः प्रदूषणेन शीघ्रं प्रभाविताः भवन्ति । अतः यत्र एतानि न दृश्यन्ते तत्र प्रदूषणम् अधिकम् इति वक्तुं शक्यम् ।



## C सन्ड्यु *(ड्रोकेरा बर्मनि)*

यत् चलितुं शक्नोति, ग्रहीतुं शक्नोति, कीटान् खादितुं च शक्नोति, तादृशं सस्यं किं दृष्टं श्रुतं वा भवद्भिः ? विश्वासः न भवति खलु तादृशस्य वृक्षस्य सद्भावे ? किन्तु तादृशः वृक्षः अस्ति इति तु सत्यम् । भारतस्य अनेकेषु कीटभक्षकवृक्षेषु सन्ड्यु अन्यतमम् । एतत् लघु सस्यम् । सामान्यतः एकरूप्यकनाणकाकारकम् एतत् । जलाधिक्ययुते प्रदेशे अधिकतया एतस्य वर्धनम् । एतस्य पर्णानाम् उपरि संलग्नशीलस्य गाढद्रवस्य बिन्दवः तत्र तत्र दृश्यन्ते । ये कीटाः एतस्य पर्णस्य उपरि उपविशन्ति ते तत्रैव संलग्नाः भवन्ति । अनन्तरं तानि पर्णानि स्वयं पुटीकृतानि भवन्ति । एवम् एतत् सस्यं स्वस्य आहारं सम्पादयति ।


3


4

## D गडुची *(टिनेस्पोराकार्डिफोलिया)*

एतस्याः पर्णानि हृदयाकारकाणि भवन्ति । एषा औषधगुणयुक्ता अस्ति । एतस्यां लतायां पर्णानि समृद्धानि भवन्ति । कदाचित् समग्रं वृक्षं व्याप्य तिष्ठति एषा लता । एषा भारतस्य सर्वेषु समशीतोष्णभागेषु वर्धते । सामान्यतः एतस्याः काण्डं खण्डशः कर्तयित्वा जले क्वथयित्वा कषायः क्रियते । एषः कषायः रोगोपशमनार्थं शक्तिवर्धनार्थं च उपयुज्यते । सामान्यतः यदा काण्डं कर्तयामः तदा लतायाः उपरितनभागः शुष्कः भवति । किन्तु एतस्याः लतायाः काण्डं कर्तयामः चेत् तत्र एव मूलानि उत्पद्य भूम्याः दिशि गच्छन्ति ।

## E शृगालपुच्छाकारकम् आर्किड् *(रैंक्रोस्टैलस् रेटूसा)*

एतानि सस्यानि वृक्षाणाम् उपरि वर्धन्ते । भारतस्य अधिक-जलांशयुते प्रदेशे, पूर्वोत्तरभागे च एतानि अधिकतया दृश्यन्ते । ग्रीष्मकाले अस्मिन् सस्ये अधोमुखकणिशाकारकं पाटलवर्णकं पुष्पगुच्छम् उत्पद्यते । दूरतः पश्यामः चेत् शृगालपुच्छम् इव दृश्यते । एतस्य विशिष्टानि हरितानि मूलानि वृक्षस्य काण्डभागे संलग्नानि भवन्ति । एतानि मूलानि वातावरणतः जलांशं पोषकाहारं च चूषन्ति । यद्यपि एतानि सस्यानि वृक्षावलम्बीनि, तथापि एतानि वृक्षात् किमपि न स्वीकुर्वन्ति, वृक्षस्य हानिम् अपि न कुर्वन्ति ।


5

*विषयः चित्रं च - विवेक गौर् - ब्रूमे*

# बीजानां संरक्षणम्

अक्कम्मा आन्ध्रप्रदेशस्य गंग्वारनामके लघुग्रामे स्थिता महिला । तस्याः गृहे ५० लघुकण्डोलाः सन्ति । प्रतिफलचयं बीजानि सङ्गृह्य स्थापयन्ति तस्याः गृहसदस्याः । प्रतिवर्षं व्रीहि-सर्षप-शिम्ब-धान्यादीनां सङ्ग्रहस्य अनन्तरम् उत्तमानि बीजानि चित्वा सङ्गृह्णन्ति ते । कीटेभ्यः संरक्षणं कर्तुं बीजेषु मृत्तिका-निम्बपर्ण-भस्मादयः स्थाप्यन्ते ।



अक्कम्मा इव देशस्य सर्वेऽपि कृषकाः यदि उत्तमानि बीजानि रक्षेयुः तर्हि बहु उत्तमं भवेत् । एवं यदि न क्रियेत तर्हि कासाञ्चन विशिष्टानां धान्यजातीनां सन्ततयः एव नष्टानि भवेयुः । विशिष्टसस्यसन्ततिः नाम का ? अत्र उदाहरणार्थं कदलीफलम् एव स्मराम । भवन्तः कतिविधानि कदलीफलानि खादितवन्तः स्युः ? दीर्घाणि पीतवर्णीयानि, लघूनि पीतवर्णीयानि, हरितानि, रक्तानि इत्यादीनि भवन्तः जानीयुः एव । भारते १६ विधानि आलुकानि, ४२ विधानि नारिकेलानि, १२४ विधाः शुण्ठ्यः, सहस्रविधानि आम्राणि (श्वासम् अवरुध्य पठन्तु) ५०,००० - ६०,००० विधाः तण्डुलाः च सन्ति प्रायः ।

एवं तर्हि व्रीहेः, आम्रस्य वा कश्चन प्रभेदः नष्टः चेत् का हानिः इति खलु प्रश्नः भवताम् ? कृषकाः बहूनि कारणानि सूचयन्ति । 'एते प्रभेदाः विभिन्नां मृत्तिकां, विभिन्नप्रमाणकं जलं च अपेक्षन्ते । विभिन्नसमये तेषाम् उत्पादनं भवति । (अत एव केचन आहारप्रभेदाः सर्वदा उपलभ्यन्ते ।) अन्यच्च, ते कीटाणुनिरोधकाः अपि भवन्ति । अतः यदि कृषकाः द्वित्रान् प्रभेदान् एककाले वर्धयन्ति तर्हि एकविधं नष्टं भवति चेत् अपि अन्यविधं तु शिष्यते एव । क्षामस्थितिः, प्रवाहः, कीटानाम् आक्रमणम् इत्यादयः आपत्स्थितयः भवन्ति चेत् अपि प्रभेदानां नाशः न भवति । कतिचन प्रभेदाः तु रुचिकारणतः, उत्सवनिमित्तं वा वर्ध्यन्ते ।

अतः पुनः यदा भवन्तः आहारवस्तूनि, शाकानि, फलानि च क्रेष्यन्ति तदा वैविध्यं यत् रक्षितं तदर्थम् अक्कम्मायाः कृते, इतर-कृषकाणां कृते च कृतज्ञताः समर्पयन्तु ।

*- सुजाता पद्मनाभन्*

*भारतदेशे एषियाटिक्सिंहः (पन्थेरा लियो पेर्सिका) ........ राज्ये ........ इत्यत्र दृश्यते ।*

# यत्र संरक्षणम् एव धर्मः ...

''राजस्थानस्य शुष्के निर्जने मरुस्थले सुन्दरकृष्णमृगाणां कश्चन लघुगणः शान्ततया विहरन् अस्ति । पार्श्वे एव धेनवः महिष्यः च स्वेच्छया सञ्चरन्त्यः सन्ति'' इति कल्पनां कुर्वन्तु, पश्याम । एतानि वाक्यानि अवास्तविकानि इति भाति खलु ? किन्तु वाक्योक्तः विषयः न अवास्तविकः । एतदर्थं बिष्णोयीसमुदायस्य जनेभ्यः अस्माभिः कृतज्ञता समर्पणीया भवेत् । यतः 'सर्वजीविनां कृते जीवनस्य अधिकारः अस्ति' इति तत्त्वे तेषां महान् विश्वासः अस्ति ।

एतस्य आरम्भः राजस्थानराज्यस्य नागौरमण्डले स्थितेन जम्बोजीनामकेन ग्रामस्थेन कृतः । एतस्य जन्म १५०३ तमे वर्षे जातम् । एषः जम्बोजीगुरुः जीववैविध्यस्य संरक्षणे थार्मरुस्थलस्य महत् पात्रं भवितुम् अर्हति इति जानाति स्म । तेन १५४२ तमे वर्षे बिष्णोयीमतस्य स्थापनं कृतम् । तस्मिन् मते २९ सरलनियमाः सन्ति ।

बिष्णोयीजनाः जीविनः रक्षन्ति । अग्निज्वालनसमये अपि काष्ठानि परीक्ष्य तत्र विद्यमानान् कीटान् निष्कासयन्ति । ते शाकाहारिणः । धूमपानं सर्वथा निषिद्धं तत्र । न केवलं तावत्, सस्येभ्यः निष्पादितैः वर्णैः युक्तानि वस्त्राणि अपि न उपयुज्यन्ते तैः । क्षेत्रस्य कर्षणसमये अपि जैविकव्यवस्थायाः हानिः यथा न स्यात् तथा व्यवहरन्ति ते । ते मेषान् अजान् वा न पालयन्ति । यतः अजादयः मरुस्थलस्य सस्यकुलं खादित्वा नाशयन्ति इति तेषां चिन्तनम् ।

बिष्णोयीजनानां जीवप्रियतायाः विषये बह्व्यः लोककथाः प्रसिद्धाः सन्ति । १७३७ तमे वर्षे जोधपुरस्य राजा अभयसिंहः भटान् आज्ञापितवान् यद् इन्धनरूपेण उपयोक्तुं काष्ठानि आनीयन्ताम् इति । यदा महाराजस्य भटाः तस्य प्रदेशस्य खेज्रीवृक्षाणां कर्तनम् आरब्धवन्तः तदा बिष्णोयीजनाः वृक्षान् आलिङ्ग्य स्थितवन्तः । सैनिकाः ३६३ बिष्णोयीजनान् मारितवन्तः । अन्ते महाराजः एव तत्र आगत्य सर्वं श्रुत्वा नरमेधं स्थगितवान् । बिष्णोयीजनाः राजस्थाने, हरियाणराज्ये, पञ्जाबराज्ये च सन्ति ।

*– बीना थामस्*

अतिमहान् भारतीयः चतुष्पात् एशियन्गजः । लघुतमः चतुष्पात् कः ? सः अस्ति पिग्मीमूषकः, यश्च अङ्गुष्ठमात्राकारकः भवति ।

## जीवनस्य नानाधिवर्णरञ्जितता ।



चित्रस्य ऐकैकम् अपि अंशं सावधानतया परिशीळयन्तु । तदा ज्ञायं

# जर्दरगांवग्रामस्य पुनरुत्थानम्

जर्दरगांवग्रामस्थः विजयवर्यः कश्चित् वृद्धः । अद्य विहारार्थं पर्वताग्रं गन्तुम् इच्छति सः ।

उत्तराञ्चलराज्यस्य पर्वतानाम् उपत्यकायाम् अस्ति जर्दरगांवग्रामः । विजयवर्यः तत्रत्ये 'रहोडोडेण्डोन्'जातीयैः, सिन्दूरजातीयैः च वृक्षैः युक्ते गहने अरण्ये सञ्चारं कर्तुम् इच्छति स्म । यथा यथा सः पर्वतारोहणम् आरब्धवान् तथा तथा ग्रामे अरण्यस्य रक्षणार्थं प्रवृत्तम् आन्दोलनं तस्य स्मृतिपथम् आगतम् । १९८० तमे वर्षे प्रवृत्तं तत् आन्दोलनं स्मृत्वा मन्दहासं प्रकटितवान् सः ।

आन्दोलनस्य केभ्यश्चित् वर्षेभ्यः पूर्वं जनाः एतस्य अरण्यस्य वृक्षान् कर्तयित्वा बहिष्टात् आगतेभ्यः तेषां विक्रयणं कुर्वन्ति स्म । अरण्यविभागस्य जनाः एतं विषयम् उपेक्षितवन्तः । अतः ग्रामस्थाः तत् अरण्यं स्वकीयं मत्वा उपयोगं कुर्वन्ति स्म ।

कदाचित् रघुवीरनामकः तत्र आगत्य तत्रत्यान् देवदारुवृक्षान् कर्तितवान् । सर्वेषां वक्रदृष्टिः देवदारुवृक्षाणां कर्तनविषये आसीत् । सर्वान् वञ्चयित्वा रघुवीरः रात्रौ एव वृक्षच्छेदनं कृतवान् आसीत् । एतस्मात् क्रुद्धाः ग्रामस्थाः अरण्यरक्षकसमीपं गत्वा सर्वं निवेदितवन्तः । सः अरण्यरक्षकः रघुवीराय धनदण्डनं विहितवान् । तदा रघुवीरः – 'मत्तः पूर्वम् अपि केचन ग्रामस्थाः वृक्षच्छेदनं कृतवन्तः सन्ति । ते कुतो वा न दण्ड्यन्ते ?' इति पृष्टवान् ।



सर्वं दृष्ट्वा विजयवर्यः चिन्तितवान् यत् एतेन ग्रामजनानां मध्ये परस्परं वैमनस्यं भवितुम् अर्हति इति । अतः सः 'रघुवीरम् अधिकृत्य दत्ताम् अभियाचिकां प्रतिस्वीकुर्वन्तु' इति ग्रामस्थान् उक्त्वा तेषाम् अङ्गीकारं प्राप्तवान् । एतया घटनया ग्रामस्थानां ज्ञानोदयः अभवत् । ये जनाः दुःस्थितौ आसन् ते जागरिताः अभवन् । तेषाम् अरण्यस्य भूयान् भागः नष्टः आसीत् । जलमूलानि शुष्कतां गतानि । पशूनां निमित्तम् अपि तृणं दुर्लभम् अभवत् । इन्धनरूपेण उपयुज्यमानानि काष्ठानि आनेतुं महिलाभिः बहुदूरं गन्तव्यं भवति स्म । दुर्भिक्षकालः बुभुक्षा च अचिरात् एव सम्मुखीकरणीया भवेत् इति ते अवगतवन्तः । ग्रामप्रमुखः ग्रामस्थानां सभाम् आयोजितवान् । सर्वे मिलित्वा निर्णीतवन्तः यत् यावत् अरण्यस्य पुनर्निर्माणं न भवति तावत् अस्माकं भविष्यम् अन्धकार-

मयम् एव स्थास्यति इति । ते सर्वे सम्भूय अरण्यरक्षणसमितिं रचितवन्तः । वृक्षच्छेदनस्य निषेधः कृतः । अरण्योत्पन्नानाम् उपयोगे नियन्त्रणं कृतम् । रन्नोदेवीपरमेश्वरौ अरण्यरक्षणार्थं नियोजितौ । ये ग्रामस्थाः

भारते बहुभ्यः वर्षेभ्यः वनौषधस्य उपयोगं ग्रामस्थाः वनवासिनः च कुर्वन्तः सन्ति इति किं भवन्तः जानन्ति ? ते सामान्यतः सार्धचतुस्सहस्राधिकविधान् सस्यप्रभेदान् उपयुज्य ५०,००० विधानि औषधानि निर्मान्ति ।

## भेदांशाः अभिज्ञायन्ताम्



दशवर्षेभ्यः पूर्वं ग्रामः यथा दृश्यते स्म तत् दृश्यम् अस्ति अत्र । स एव ग्रामः अद्य दृश्यते एवम्...



उभयोः चित्रयोः कियन्तः भेदांशाः सन्ति इति किं भवन्तः अभिज्ञातुं शक्नुवन्ति ?

नियमोल्लङ्घनं कुर्वन्ति तेभ्यः उचितदण्डविधानम् आरब्धम् । परमेश्वरः सर्वदा हस्तेन दण्डं गृहीत्वा कर्तव्यपालनं करोति स्म । रन्नोदेवीं दृष्ट्वा सर्वे भीताः भवन्ति स्म । यदि कोऽपि अरण्यं प्रवेष्टुम् इच्छति तर्हि तेन शिलाप्रहारः, रन्नोदेव्याः निन्दनानि वा सम्मुखीकरणीयानि भवन्ति स्म ।

यथा यथा वर्षाणि अतीतानि तथा तथा सः प्रदेशः हरितः अभवत् । निर्झरेभ्यः पुनश्च आवर्षं जलप्रवाहः आरब्धः । तृणम् अपि समृद्धम् अभवत् । वृक्षाः अपि समीचीनतया प्रवृद्धाः । वृक्षरहितः सः पर्वतप्रदेशः विंशतिवर्षाभ्यन्तरे गभीरारण्यरूपेण परिणतः अभवत् ।

विजयवर्यः पर्वताग्रं गत्वा परितः दृष्टिं प्रसारयन् अतिष्ठत् । सः पर्वतमूले व्याघ्रगर्जनं श्रुतवान् । वनराजस्य अपि पुनरागमनं जातम् आसीत् । यतः सोऽपि स्वगृहं प्रतिप्राप्तवान् आसीत् । ग्रामस्थाः अपि ज्ञातवन्तः यत् वृक्षच्छेदनार्थम् आगन्तृभ्यः वयं रक्षिताः अभवाम इति । यतः यावत् पट्टिकायुक्तः 'महाराजः' भवति तावत् अरण्यं सुरक्षितम् एव खलु ? विजयवर्यस्य मुखं मन्दहासेन प्रकाशमानं जातम् ।

– ***रोशनी कुट्टी***

# वन्यं विस्मयकरं च

***अत्र विस्मयकराणि प्राणिलोकात् चितानि कतिचन प्राणिनां चित्राणि दत्तानि सन्ति । भारते लभ्यमानेषु ८१,००० प्राणिप्रभेदेषु एतानि पञ्च एव अत्र दत्तानि ।***

## हूलोक् गिब्बन्
### (हैलोबटस् हूलाक्)

एषः प्राणी भारतस्य पूर्वोत्तरभागे अरण्येषु अधिकतया दृश्यते । यस्य स्थितिः इदानीं सन्देहास्पदम् अस्ति तादृशः भारतीयः एप्जातीयकः प्राणी एषः एकः एव । (एप् वानरसदृशः लाङ्गूलरहितः च, किन्तु वानरात् भिन्नः ।) वयस्कः गिब्बन्, बाला (स्त्री)गिब्बन् च कृष्णवर्णौ भवतः । किन्तु स्त्री गिब्बन् प्रौढावस्थायां पीतवर्णीया भवति । एतस्य हस्तौ पादयोः अपेक्षया दीर्घौ । एषः जीवनस्य अधिकांशभागं वृक्षे एव यापयति । शाखातः शाखां प्रति कूर्दन् भवति । गिब्बन् सर्वदा कुटुम्बेन सह वासं कर्तुम् इच्छति । फलानि, पर्णानि, कीटाः, कृमयः च एतस्य आहारः । पर्णानाम् उपरि स्थितं जलं संगृह्य पिबति एषः ।



Alok Tamta



Vivek Gour-Broome

## रत्नमयी पिङ्कपिशा

महापिङ्कपिशायाः वर्णः प्रगाढः । तदीयं शरीरं कान्तियुक्तम् । वयस्का पिङ्कपिशा सामान्यतः वर्षाकाले दृश्यते । एतस्याः आयुः अल्पम् । वर्षाकालस्य अन्ते सहचारिणा सह मेलनानन्तरम् एषः मरणं प्राप्नोति । मरणात् पूर्वं शिरीषवृक्षस्य मूले अण्डानि स्थापयति । कोषावस्थायाम् एते कीटाः वृक्षमूलं, वृक्षस्य त्वचं वा खादित्वा वर्धन्ते । युवावस्थां प्राप्तुं नव मासाः अपेक्षिताः । वयस्कः पिङ्कपिशः तस्यैव वृक्षस्य पर्णानि खादित्वा जीवति । वनवासिनः एतस्य प्रगाढकान्तियुक्तेन पक्षेण आभूषणानि रचयन्ति ।

# ग्रेट् इण्डियन् बस्टर्ड्

*(अर्डियोटिस् निग्रिसेप्स्)*

भारतीयः, महाकारकः, विरलतया दृश्यमानः पक्षी कः स्यात् ? सः न अन्यः, अपि तु 'ग्रेट् इण्डियन् बस्टर्ड्' पक्षी एव । विरलदर्शनेषु पक्षिषु अन्यतमः एषः पूर्वं भारतस्य अर्द्रतारहितप्रदेशे सर्वत्र अधिकतया दृश्यते स्म । किन्तु इदानीं दशप्रतिशतभागमात्रे दृश्यते । एषः विभिन्नकणिशेषु विद्यमानानि धान्यानि खादित्वा जीवति । एषः गृहगोधिकाः, शलभान्, शतपदिनः, तत्सदृशान् अन्यान् चापि खादति ।


Asad Rahmani/Sanctuary Photolibrary

एषु दिनेषु एषः पक्षी भारतस्य पश्चिमभागे, मध्यभारते च दृश्यते । अरण्येषु विरलतया एव दृश्यते ।


Vivek Gour-Broome

# चर्मकवचयुक्तः कच्छपः

*(डेर्मोचेलस् कोरियासिया)*

जगति विद्यमानेषु समुद्रकूर्मेषु विशेषरूपेण शोभमानः अस्ति एषः महाकच्छपः । इतर-कच्छपानाम् इव एतस्य पृष्ठभागे दृढः शुक्तिकवचः न भवति । प्रत्युत, कवचसदृशं चर्मणः दृढावरणं भवति । समीचीनतया सरणसमर्थः एषः जीवनस्य अधिकांशभागं समुद्रात् बहिः एव यापयति । सान्द्रद्रव्ययुतान् मत्स्यान् (जेल्ली फिष्) खादित्वा जीवति एषः । कच्छपी वर्षे एकवारम् अण्डमान्निकोबार्-द्वीपसमूहम्, दक्षिणपूर्वेषियाखण्डस्य समुद्रतीरं वा आगत्य अण्डानि स्थापयति । एतेषां संख्या ह्रासतां गच्छन्ती अस्ति एषु दिनेषु । मृगयया, मत्स्यजाले पतनेन, समुद्रतीरे जायमानेन व्यत्ययेन च एते मरणं प्राप्नुवन्ति ।


Pankaj Sekhsaria

# प्रवालः

लघुप्राणिनां गणेषु प्रवालः अन्यतमः । पोलिप्नामके जीवप्रभेदे अन्तर्भवति एषः । एषः समुद्रजले वसति, झूप्लाकटन्नामकान् जीविनः च खादति । पोलिप्जीवप्रभेदे अन्तर्भूताः जीविनः स्वं परितः सुधया एकं कवचं निर्मान्ति । तदर्थं समुद्रजलात् एव सुधां (क्याल्सियम् कार्बोनेट्) प्राप्नुवन्ति एते ।

विभिन्नानां प्रवालानां वसतिसमुच्चयाः एव दृश्यन्ते समुद्रे । गुच्छरूपेण एते प्रवालाः तिष्ठन्ति । शतशः जीविनां आश्रयस्थानम् एषः । जीवन् प्रवालः नील-हरित-कपिश-पीतादिभिः प्रगाढवर्णैः उपलभ्यते । प्रवालाः सामान्यतः समुद्रस्य स्फटिकसदृशे स्वच्छे जलस्तरे उपलभ्यन्ते । लक्षद्वीपे, अण्डमान्निकोबारद्वीपसमूहे च प्रवालानां सुन्दराः वसतिसमुच्चयाः दृश्यन्ते ।

*विषयसज्जा - विवेक गौर् - ब्रूमे*

# भवन्तः जीववैविध्यं च

*प्रतिदिनं वयं विद्यालये गृहे विरामकाले वा किं कुर्मः ? अस्माकं निकटवर्तिनां, दूरवर्तिनां च सस्यानां प्राणिनां च नाशने निरताः तु न स्याम खलु ? अनेके नगरवासिनः स्वगृहनिमित्तम् अमृतशिलामयं ग्रेनैट्मयं वा फलकास्तरणं निर्मातुम् इच्छन्ति । एतत् अङ्गीकरणयोग्यम् एव । यतः एतैः निर्मितं फलकास्तरणं सुन्दरं दृश्यते । किन्तु एकं विषयं स्मरन्तु – अमृतशिलानां ग्रेनैट्शिलानां वा निष्कासनार्थं बहुभागस्य अरण्यस्य नाशः करणीयः भवति ।*

*अधोलिखितप्रश्नानां द्विविधम् उत्तरं दत्तम् अस्ति । एकस्य उत्तरस्य अङ्कनं कृत्वा अङ्कनिर्देशानुसारम् अङ्कान् जानन्तु । स्वस्य जीववैविध्यप्रेम कियत् अस्ति इति परिशीलयन्तु । तदनुसारं परिसरविषये स्वस्य व्यवहारः कथं स्यात् इत्यपि निर्णयन्तु ।*

१. यदा गृहात् बहिः बहुदिनानि यावत् गन्तुम् इच्छन्ति तदा भवन्तः -
   क) पिपासा यदा भवति तदा पातुं कूपीस्थं जलं, कूपीस्थानि शीतपेयानि वा स्वीकुर्वन्ति ।
   ख) गृहतः एव कुप्या जलं नयन्ति ।

२. भवन्तः कीदृशीं क्रीडाम् इच्छन्ति ?
   क) यत्र केवलायाः स्वशक्त्याः उपयोगः भवति तादृशीम् । तन्नाम बहिर्गृहक्रीडाम् ।
   ख) हस्तेन गृहीत्वा विद्युत्कोशस्य साहाय्येन क्रीडितुं योग्यां क्रीडाम् ?

३. भवन्तः किम् एतानि धरन्ति ?
   क) पॉलिस्टर्मयानि, कृतकतन्तुभिः निर्मितानि वा वस्त्राणि ।
   ख) कार्पासवस्त्राणि ।

४. भवन्तः सामान्यतः केन वाहनेन विद्यालयं गच्छन्ति ?
   क) कार्यानेन, भाटकवाहनेन, पादाभ्याम्, द्विचक्रिकया वा,
   ख) लोकयानेन ।

५. यदा भवन्तः मित्रेभ्यः पत्रं लिखन्ति तदा
   क) कागदस्य एकपार्श्वस्य एव उपयोगः क्रियते ।
   ख) कागदस्य पार्श्वद्वयेऽपि लिख्यते ।

'Parrots' पक्षिणः भारते दृश्यन्ते, उत न ?
'Parakeets' एव दृश्यन्ते ।

***अङ्कनिर्देशः*** *– अत्र जीववैविध्यपराणां प्रश्नानाम् उत्तराणि सन्ति । उत्तरेण सह तदेव उत्तरं किमर्थम् इति कारणं दत्तम् अस्ति । एकैकस्य अपि उत्तरस्य दश अङ्काः । अशुद्धोत्तरार्थं दश अङ्कान् न्यूनीकुर्वन्तु । यदि भवताम् अङ्काः ५० तर्हि भवन्तः सस्यानां प्राणिनां च वास्तविकमित्राणि । भवद्भिः चत्वारिंशत्तः न्यूनाः अङ्काः प्राप्ताः चेत् स्वस्य जीववैविध्यमित्रत्वस्य प्रकाशनात् पूर्वं स्वजीवनशैल्याः परिवर्तनं वरम् ।*

१. ख) कस्याश्चित् संस्थायाः मुद्रया अङ्कितं जलं प्लास्टिक्कूपीषु, स्यूतेषु वा सर्वत्र लभ्यते। वैज्ञानिकदृष्ट्या प्लास्टिक्वस्तूनि नाशरहितानि। अनवधानेन पशवः, पक्षिणः, मत्स्याः वा एतानि खादन्ति। कच्छपाः लघु प्लास्टिक्खण्डान् जेल्लीमत्स्यान् मत्वा गिलन्ति। अन्ते ते वेदनापूर्णं मरणं सम्मुखीकुर्वन्ति। टेट्राप्यक्नामकेन बाह्यावरणेन युक्तस्य दृढपत्रस्य अन्तर्भागः अल्यूमिनियम्-आवरणेन युक्तः भवति। कागदं कर्तुं वयं वृक्षच्छेदनं कुर्मः। बाक्सैट्प्रभृति-खनिजानां निष्कासनार्थम् अरण्यं नाशयामः। अल्युमिनियंनिर्माणे बाक्सैट् अत्यन्तम् आवश्यकम्। अल्युमिनियम् उपयोगानन्तरं क्षेपणेन न नश्यति, न वा मृत्तिकारूपं प्राप्नोति।

२. क) विद्युत्कोशेषु सीसं भवति। यदा क्षिपामः तदा प्राणिनः तस्य सेवनं कृत्वा अपायं सम्मुखी-कुर्वन्ति। सीसस्य सेवनम् अपायकारकम्। मानवशरीरे सीसस्य प्रमाणम् अधिकं भवति चेत् मानसिकवृद्धौ व्यत्ययः भवति। नरदौर्बल्यं बाधते। अन्ये अपि बहवः विपरिणामाः भवितुम् अर्हन्ति। एवं स्थिते लघुजीविनः उपरि तस्य परिणामः कीदृशः स्यात्? भारते विद्युत्-कोशानां विनियोगः व्यवस्थिततरीत्या न क्रियते।

३. ख) पॉलिस्टरेण, कृतकतन्तुभिः वा निर्मितानि वस्त्राणि पेट्रोलियम्-उत्पन्नानि इति उच्यन्ते। पेट्रोलियम्-उत्पादनसमये अपि अस्माभिः अरण्यनाशः करणीयः भवति। समुद्रजीविनां जीवने अपि व्यत्ययः आनेतव्यः भवति।

४. ख) यदा भवन्तः लोकयानस्य उपयोगं कुर्वन्ति तदा भवद्भिः सह अनेके जनाः तस्य उपयोगं स्वीकर्तुम् अर्हन्ति। स्वीयवाहनस्य उपयोगात् अपि एतेन इन्धनस्य सञ्चयः भवति अधिक-तया। वायुप्रदूषणम् अपि न्यूनं भवति।

५. ख) कागदानां निर्माणार्थं वृक्षाणां छेदनं क्रियते। कागदस्य उभयभागम् उपयुञ्ज्महे चेत् अधिक-वृक्षाणां छेदने कारणीभूताः न भवेम। एतेन परोक्षतया अरण्यनाशस्य, प्राणिवर्गनाशस्य, परिसरनाशस्य च निवारकाः भवेम।

– *शान्ता भूषणः*




## प्रश्नानाम् उत्तराणि

**महाजीविनः लघुजीविनश्च** – मयूरः, पक्षोपेता गोधिका, घेण्डामृगः, व्याघ्रः, मकरः, गृहगोधिका, कर्कटकः, मीनः, मण्डूकः, हंसः, चिक्रोडः, चटकः, कपिः, कूर्मः, सर्पः, हरिणः, भल्लूकः, पतङ्गः, अजगरः, मीनभक्षी पक्षी, शुकः, शम्बूकः, वृक्षः, कमलं, मनीप्लेण्ट्लता, तृणानि च।

**चित्ताकर्षकः सस्यवर्गः** – A-3, B-5, C-2, D-1, E-4

**भेदांशाः अभिज्ञायन्ताम्** – मधुमक्षिकागृहं न दृश्यते, विरलाः पक्षिणः, एकः वृक्षः कर्तितः, मृतौ मीनौ, कुटीरस्थाने भवनम्, मद्याम् अवकरं क्षिपन्ती महिला, सस्येषु पुष्पाणि न्यूनानि।

**योजयत** – 1-D, 2-A, 3-B, 4-C

# वर्णलेपनस्य आमोदः !

*भोः, स्वस्य प्राचीनानि कार्पासवस्त्राणि इतःपरं रासायनिकवर्णैः मा लिप्यताम्, नूतनपरम्परायाः अरम्भः क्रियताम् । शाकैः वर्णानां निर्माणं कृत्वा वस्त्राणां वर्णलेपनं क्रियताम् । अन्यवस्त्राणि, ऊर्णिकाः, स्यूताः इत्यादयः तादृशैः एव वर्णैः रञ्जितानि भवन्तु । वर्णलेपनार्थं कृतकतन्तुभिः निर्मितं वस्त्रं मा स्वीकुर्वन्तु । प्राचीनस्य कार्पासवस्त्रस्य, श्वेतवस्त्रस्य, यस्य वर्णः गतः अस्ति तादृशस्य प्रोञ्छस्य वा स्वीकारात् अद्यैव आरब्धा भवतु भवतां परिसरप्रियता ।*

द्वित्राणि मध्यमाकारकाणि शर्कराकन्दानि स्वीकुर्वन्तु । तानि खण्डशः कर्तयन्तु । एकस्मिन् पात्रे तान् खण्डान् स्थापयित्वा पर्याप्तमात्रेण (खण्डाः यथा निमज्जिताः भवेयुः तथा) जलं योजयन्तु । कस्यचित् ज्येष्ठस्य साहाय्येन चुल्लीं ज्वालयन्तु । पात्रं चुल्लेः उपरि स्थापयन्तु । यदा जलं रक्तवर्णीयं भवति तदा पात्रम् अवतार्य स्थापयन्तु । शोधन्या जलं पृथक्कुर्वन्तु । भवतां वर्णः सिद्धः !! (खण्डान् कोशम्भरीकरणार्थं रक्षन्तु) पुनश्च पात्रं चुल्लेः उपरि स्थापयन्तु । मन्दाग्निः भवतु । प्रोञ्छं पात्रे स्थापयित्वा दण्डेन चमसेन वा आलोडयन्तु । यदा प्रोञ्छः भवद्भिः इष्टां वर्णच्छायां प्राप्नोति तदा चुल्लीं निर्वापयन्तु । आरात्रि वस्त्रं तस्मिन् जले एव भवतु ।



गाढः वर्णः अपेक्षितः चेत् शौक्तिकं योजयन्तु । शर्कराकन्दस्थाने होलीहाक्नामकानि पुष्पाणि उपयोक्तुं शक्यानि । रक्तवर्णार्थं रुद्रपुष्पं, हरितवर्णार्थं हरीतकीं, पीतवर्णार्थं मधूकपुष्पं, कृष्णवर्णार्थं कपिशवर्णार्थं च शुष्कीकृत्य क्वथितानि आमलकानि गूस्बेरीफलानि वा उत्तमानि ।

अपराजितापुष्पाणि, मन्दारपुष्पाणि, रुद्रपुष्पाणि, सिन्धुवरपुष्पाणि, मेहन्दिपर्णानि वापि संगृह्य शुष्काणि कृत्वा रक्षितानि चेत् सार्वकालिकं वर्णं कर्तुं शक्यम् । एतानि पर्णानि पुष्पाणि च छायायाम् एव शोषणीयानि । तेन वर्णः रक्षितः भवति । अतः पुनः यदा भवन्तः वर्णम् इच्छन्ति तदा भवद्भिः आरात्रि जले स्थापनमात्रं करणीयम् ।

**- श्रुती देवी**

१९७० तमे वर्षे भारतस्य हिमालय-भागे प्रवृत्तस्य आन्दोलनस्य नाम किम्, यत्र च जनाः छेदनम् अवरोद्धुं वृक्षान् आलिङ्ग्य स्थितवन्तः ?

। चिप्को-आन्दोलनम् ।

**- सीमा भट्ट**

# दशमः वार्षिकोत्सवः
# 'न्याषनल् फौण्डेषन् फॉर् इण्डिया' संस्थायाः




फोर्ड्संस्थायाः अध्यक्षया श्रीमत्या सुसान् बेरेस्फोर्डवर्यया दशम-वार्षिकोत्सवस्य सञ्चिका लोकाय अर्पिता ।

*''एवस्याः सञ्चिकायाः गुणवत्ता-निमित्तं, लेखकानां चयननिमित्तं (मां विहाय) अहम् एन्. एफ्. ऐ. संस्थायाः अभिनन्दनं करोमि । भारतस्य नागरिकसमाजविषये इतोऽप्युत्तमतरः प्रयत्नः मया न दृष्टः । एन्.एफ्.ऐ.-संस्थया पुनरपि एतादृशः प्रयत्नः क्रियेत इति अस्ति मम विश्वासः ।''*

**– सुन्दर बुरा,**
मन्त्रणाकार SPARC,
मुम्बई

*''अत्यन्तम् उपयोगि, आसक्तिदायकं, परिपूर्णं च एतत्''*

**– आशीष कोठारी,**
संयोजकः, एन्.बी.एस्.ए.पी.

*''अत्रत्यानि लेखनानि कालोपयोगीनि उद्बोधकानि च''*

**– दीप जोशी,**
PRADAAN

*''श्रेष्ठैः लेखकैः लिखितानां लेखानां विशिष्टः सङ्ग्रहः एषः दशमवार्षिकोत्सवाचरणस्य समुचितः मार्गः''*

**– नीलीमा खैतान,** सेवामन्दिरम्

स्वयंसेविसंस्थाभिः समाजहितचिन्तकैः च भविष्यत्काले कीदृशं पात्रं वोढव्यम् इति विचारम् अभिप्रायं च सङ्कलयन् ***'A Comman Couse'*** इत्येषः यत्नः सर्वान् समानवेदिकां प्रति आनयति । मूलस्तरीयकार्यकर्तारः, तत्कार्यनेतारः, सर्वकारीयेतरसंस्थानां संस्थापकाः, कार्यक्रमसंयोजकाः, आर्थिकसाहाय्यदातारः, राष्ट्रहितचिन्तकाः, बुद्धिजीविनः च स्वयंसेविविभागस्य विविधमुखानि अधिकृत्य अनुभवानां विनिमयं कुर्वन्तः स्वाभिप्रायान् प्रकाशितवन्तः सन्ति अत्र । प्रजाप्रभुत्वस्य मौल्यानि अधिकृत्य, कार्यकरणसमये उद्भवतां कष्टानां विषये, एतादृशकार्याणाम् इयत्ताविषये च यत् त्वरया अवधातव्यम् अस्ति तद्विषये प्रकाशं पातयन्ति अत्रत्याः लेखाः । एवम् आशास्यते यत् ***'A Comman Couse'*** इत्येतत् न केवलं चिन्तनाय ग्रासं कल्पयति, अपि तु भारते स्थितानां स्वयंसेविसंस्थानां मध्ये परस्परविचाराणाम् आदानप्रदानाय प्रेरणाम् अपि ददाति ।



*प्रतिकृतीनां निमित्तं सम्पर्क्यताम् –*

**NATIONAL FOUNDATION FOR INDIA**
Core IV A, UG Floor, India Habitat Center, Lodi Road, New Delhi - 110 003
Ph : 464 18 64/65, 464 84 90/92 Fax : 464 18 67
Email : info@nfi.org.in Website : www.nfi.org.in

# भारतरत्नसि.सुब्रह्मणियस्मारकम्

## जनजीवनपोषणं समुदायनायकत्वं च अधिकृत्य दीयमानम् अर्थसाहाय्यम्

**भारतराष्ट्रियप्रतिष्ठानं (एन्.एफ्.ऐ.) समुदायनायकत्वं जनजीवनपोषणं च अधिकृत्य आर्थिकसाहाय्यं ददाति भारतरत्नस्य श्री सि.सुब्रह्मणियवर्यस्य संस्मरणार्थम् ।**

एतस्य संस्थापकाध्यक्षः अस्ति भूतपूर्व-आहारकृषिसचिवः श्री सि.सुब्रह्मणियवर्यः ।

एतत् वार्षिकम् अर्थसाहाय्यं द्विविधम् - स्वयंसेवाक्षेत्रीयकार्यकर्तृभ्यः दीयमानं, समुदायस्तरीयनायकाय दीयमानं चेति ।

लक्षरूप्यकमितम् अर्थसाहाय्यं प्रतिक्षेत्रं द्वयोः कृते (आहत्य चतुर्भ्यः) दीयते प्रतिवर्षम् ।

एतस्य अर्थसाहाय्यस्य आधारः अस्ति फोर्ड् फौण्डेशन् ।

आर्थिकसाहाय्यदानाय चितः स्वयंसेवाक्षेत्रीयः प्रसिद्धसंस्थायां स्थाप्यते, यत्र च सःआहार-जनजीवन-सुरक्षाधारितान् प्रयोगान् पश्यन् तत्रत्यैः सह समालोचनं कर्तुम् अर्हति ।

एतत् अर्थसाहाय्यं तस्य कौशलं नायकत्वगुणान् च अभिवर्धयत् जनजीवनाभिवृद्धिक्षेत्रीयम् अवगमन-सामर्थ्यं तीक्ष्णीकरोति ।

सामुदायिकनायकत्वक्षेत्रीयम् अर्थसाहाय्यं स्वकार्यकर्तॄणां निमित्तं नायकत्वविकाससम्बद्धानां कार्यक्रमाणाम् आयोजने उपकरोति स्वयंसेविसंस्थाभ्यः । स्वस्थले उपलभ्यमानं स्थल-जल-वन्यसम्पदादीनां विवेचन-पूर्वकोपयोगाय अपेक्षितं तन्त्रज्ञानं विकासयितुं यत् कौशलम् आवश्यकं तद्विषये विशेषावधानं ददाति ।

### अर्हता –

- मध्यवयस्काः स्वयंसेविसंस्था-कार्यकर्तारः ।
- आहारजीवनपोषणक्षेत्रे विशेषतः आसक्ताः महिलाः ।
- जनजीवनाधारितक्षेत्रे अनुभव-वन्तः समुदायनायकाः ।

### आवेदनपत्रेण सह अवश्यं प्रेषणीयाः अंशाः –

- कार्यक्षेत्रस्य स्थूलपरिचयः ।
- पूर्वं यत्र कार्यं कृतं तद्विषये लघु लेखः ।
- सहायधनं यस्मिन् क्षेत्रे उपयुज्येत तद्विषये चिन्तिता स्थूला कार्ययोजना ।

*अधिकविवरणार्थं सम्पर्क्यताम् -*



**NATIONAL FOUNDATION FOR INDIA**
Core IVA, UG Floor, India Habitat Center, Lodi Road,
New Delhi - 110 003 Ph : 464 18 64/65, 464 18 90/92 Fax : 464 18 67
Email : info@nfi.org.in Websit : www.nfi.org.in

# प्रधानमन्त्रिणे पत्रं लिखन्तु !

*जीववैविध्यस्य संरक्षणविषये यदि भवन्तः **वसुधातः** प्रेरणां प्राप्तवन्तः सन्ति, तर्हि कृपया अधोलिखिते पत्रे हस्ताङ्कनं कृत्वा एतं सङ्केतं प्रति प्रेषयन्तु । Act for Vasudha, Chandamama India Limited, 82, Defence Officer's Colony, Ekkatuthangal, Chennai - 600 097. वयं भवतां सर्वाणि पत्राणि सङ्गृह्य कार्याचरणार्थं प्रधानमन्त्रिणे प्रेषयिष्यामः ।*

---

**मान्य प्रधानमन्त्रिवर्य,**

क्रियाशीलम् आरोग्यकरं च भविष्यं कामयमानाः वयं भारतीयाः, नित्यजीवने विषकरवस्तूनां प्रयोगाधिक्यं दृष्ट्वा चिन्ताक्रान्ताः स्मः । अस्माकं मातापितरौ पूर्वजाश्च सरलं सुरक्षितं जीवनं यापितवन्तः । किन्तु इदानीन्तनबालाः वयं निरन्तरविज्ञापिकाद्वारा इतरमाध्यमद्वारा च तादृशवस्तूनाम् उपयोगे बलात् प्रवर्तिताः स्मः, यानि जनानां प्राणिनां सस्यानां भूमेश्च कृते हानिकारकाणि सन्ति ।

**अतः भवन्तं वयं निवेदयामः यत् -**

१. विषकारकवस्तूनाम् उत्पादनविषये, उपयोगस्य नियन्त्रणविषये च उचितं कार्याचरणं करोतु । रासायनिकवर्णानां, भूसारवर्धकानां, कीटनाशकानां, रासायनिकफलवर्धकानाञ्च उत्पादने नियन्त्रणं साधयतु । प्लास्टिक्स्यूतानां निषेधः करणीयः । यानि रासायनिकवस्तूनि आहारपदार्थेषु वर्णरूपेण, संरक्षकरूपेण, कृतकस्वादरूपेण वा उपयुज्यन्ते तेषां विषये अपि योग्या प्रक्रिया करणीया ।

२. वस्त्रस्यूताः, सस्यजन्यवर्णाः, गोभरः, सस्यजन्यकीटनाशकानि इत्यादीनि यानि अस्माकम् इतरजीविनां च कृते हानिकारकाणि न, तादृशानां पर्यायवस्तूनाम् उपयोगः प्रोत्साहनीयः ।

वयं प्रतिजानीमहे यत् विषकरवस्तूनां स्थाने पर्यायरूपेण लभ्यमानानि सुरक्षितानि वस्तूनि एव उपयुञ्महे इति । वयं मातापितॄन्, गृहसदस्यान्,मित्राणि च तस्मिन् कार्ये प्रवर्तयिष्यामः अपि ।

आदरणीय प्रधानमन्त्रिवर्य, वयं विश्वसिमः यत् भवान् अस्माकं, कोटिशः सस्यानां, प्राणिनां च भविष्यं सुरक्षितं कर्तुं योग्यां प्रक्रियाम् आरभते इति ।

वयं भवतः प्रत्युत्तरं निरीक्षामहे ।

भवदीयः विश्वासी

(वाचकस्य हस्ताङ्कनम्)

नाम - ____________________ वयः - ____________________

सङ्केतः - ________________________________________

________________________________________

# काश्मीरीया जानपदकथा

जम्मुकाश्मीरराज्यं 'भूस्वर्गः' इति वर्ण्यते लोकेन । एतत् राज्यं भारतस्य उत्तरभागे विराजते । ३२.१७ – ३६.५८ कोणमिते उत्तर-अक्षांशे, ८०.३० कोणमिते पूर्व-रेखांशे च अस्ति एषः प्रदेशः । एतस्य पश्चिमदिशि पाकिस्थान-अफघानिस्थानदेशौ, पूर्वदिशि चीनदेशः, दक्षिणदिशि हिमाचल-प्रदेशश्च सन्ति । भारतस्य इतरराज्यैः, केन्द्रशासितप्रदेशैः च सह तोलयामः चेत् विस्तीर्णतादृष्ट्या षष्ठं, जनसङ्ख्यादृष्ट्या सप्तदशं च उच्चाङ्कं प्राप्नोति एतत् राज्यम् ।

उत्तरे स्थिते एतस्मिन् राज्ये त्रयः विभिन्न-वातावरणयुक्ताः प्रदेशाः सन्ति – अत्यन्तं शीतः लडाख्प्रदेशः, मध्यमोष्णांशयुतः काश्मीरव्यालीप्रदेशः, समतलयुतः जम्मू-प्रदेशः चेति । समुद्रस्तरतः १००० पादमितोन्नतः भूभागः, २८,२५० पाद-मिताधस्तनभूभागः चापि अत्र द्रष्टुं शक्यः । एतादृशं वैपरीत्यम् अस्मिन् राज्ये एव द्रष्टुं शक्यम् ।

जम्मुकाश्मीरराज्यस्य अपरं वैशिष्ट्यं राजधानीविषये । एतस्य राज्यस्य राजधानी-द्वयम् । एका ग्रीष्मकालीना, अपरा शीतकालीना । ग्रीष्मकाले श्रीनगरं राजधानीत्वेन भवति, शीतकाले जम्मुनगरं राजधानीत्वेन कार्यं करोति । उर्दु, कश्मीरी, हिन्दी, डोग्री, पहाडी, लडाखी इत्येताः अत्रत्याः व्यावहारिक्यः भाषाः ।

## हसन्मत्स्यीया समस्या

पूर्वं काश्मीरराज्ये फिरोज्शाहनामकः राजा राज्ञ्या शकिलया सह वसति स्म । एकदा काचित् मत्स्यविक्रयिका मत्स्यानां विक्रयणार्थं राज्ञ्याः प्रासादम् आगतवती । तस्याः कण्डोले कश्चन विशिष्टः मत्स्यः आसीत् ।

राज्ञी मत्स्यविक्रयिकाम् अपृच्छत् – ''भवत्याः समीपे मत्स्या अस्ति किम् ?'' इति ।

तदा मत्स्यविक्रयिका – ''नैव महाराज्ञि, मम समीपे पुंमत्स्याः एव सन्ति'' इति उक्तवती ।



अपरस्मिन् क्षणे एव कश्चन विशिष्टः हासः श्रुतः । राज्ञी आश्चर्यचकिता अभवत् । यतः सः हासः मत्स्यविक्रयिकायाः कण्डोले स्थितस्य विशिष्टमत्स्यस्य आसीत् ।

राज्ञी एतां समस्यां महाराजस्य समीपं नीतवती । सभासत्सु हुसेननामकः कश्चन महाबुद्धिमान् आसीत् । राजा तदा तदा हुसेनं समस्याः उक्त्वा उत्तराणि ज्ञातुम् इच्छति स्म । अतः राजा एताम् अपि समस्यां हुसेनम् उक्त्वा 'उत्तरं वदतु' इति सूचितवान् । ''यदि भवान् आगामिनूतनझूनतः पूर्वम् उत्तरं न वक्ष्यति तर्हि भवतः शिरच्छेदनं करिष्यते'' इत्यपि सूचितवान् राजा ।

उत्तरं ज्ञातुं राज्ये सर्वत्र सञ्चारः करणीयः इति निश्चितवान् हुसेनः । प्रवाससमये रहमान्नामकः कश्चन तरुणः तेन मिलितः । रहमानः पहलगांवं प्रति गच्छन् आसीत् । ''एतस्य परिचयं प्राप्य अधिकानि मित्राणि प्राप्स्यामि, एतस्य साहाय्यं च प्राप्स्यामि' इति निश्चितवान् हुसेनः । यदा मध्याह्नकालः अभवत्, वातावरणे उष्णता च अधिका अभवत्, तदा हुसेनरहमानौ श्रान्तौ जातौ ।

मार्गे हुसेनः रहमानं पृष्टवान् – ''प्रवाससमये आवां परस्परयोः भारं पर्यायरूपेण वहावः चेत् सम्यक् भवेत् खलु ?'' इति ।

तदा रहमानः – 'परस्परयोः भारवहनम् इत्यस्य कोऽर्थः स्यात्' इति चिन्तनम् आरब्धवान् ।

मार्गे तौ एकत्र धान्यानां विपणिं दृष्टवन्तौ । पुनश्च हुसेनः रहमानं पृष्टवान् – ''धान्यं खादनयोग्यम्, उत न ?'' इति ।

तस्य प्रश्नम् अवगन्तुम् अशक्तः रहमानः – ''अहं न जानामि'' इति उक्तवान् ।

तद्दिने सायं तौ कञ्चित् ग्रामं प्राप्तवन्तौ । यदा तौ प्रार्थनामन्दिरं प्रविष्टवन्तौ तदा केऽपि तौ न अभिवादितवन्तः, न वा आहूतवन्तः । तदा हुसेनः – ''किमर्थम् आवां श्मशानं प्रति आगतवन्तौ ?'' इति पृष्टवान् । तदा रहमानः – ''भवता जनाः न दृश्यन्ते किम् ? एतत् श्मशानं न'' इति उक्तवान् ।



अग्रे तौ मार्गे श्मशानं दृष्टवन्तौ । तत्र जनाः मृतस्य कस्यचित् स्मरणार्थं दम्गोष्ट–कुलछा–प्रभृतीनां वितरणं कुर्वन्तः आसन् ।

तदा हुसेनः – ''अहो, कियत् उत्तमं नगरम् एतत् !'' इति साश्चर्यम् उक्तवान् । आनन्देन सः भोजनस्य आस्वादनं कृतवान् ।

तदा रहमानः – 'कीदृशः मूर्खः एषः ! कदाचित् एषः आकाशं भूमिः इति, भूमिं च आकाशः इति च वदेत्' इति विचिन्त्य मौनम् आश्रितवान् ।

# दर्शनयोग्यानि स्थलानि



''गर-बर-रु-ए-झमीं अस्त ! हमीं अस्त, हमीं अस्त, हमीं अस्तो ।'' (यदि भूम्यां कोऽपि स्वर्गः स्यात् । सः एषः एव ।) एतानि वाक्यानि देहल्यां स्थिते रक्तदुर्गे दीवन् ऐ-आम् इत्यस्य छदौ उत्कीर्णानि सन्ति । तत् भवनं मोगल्-चक्रवर्तिना शाहजहान्वर्येण निर्मितम् । काश्मीरस्य दर्शनानन्तरं प्रवासिनः निश्चयेन एतानि वाक्यानि स्मरन्ति ।

काश्मीरं सर्वेऽपि 'भूस्वर्गः' इति उल्लिखन्ति । सुन्दराणि सरोवराणि, हिमाच्छादितानि शिखराणि, रमणीयाः उपत्यकाः, विकसितैः केसरपुष्पैः सुशोभितानि क्षेत्राणि ...एवम् एषा सूची अन्त्यरहिता एव तिष्ठति ।

दालूसरोवरं तु जगत्प्रसिद्धम् । सर वाल्टर् लारेन्स्नामकः तु 'उत्कृष्टं सरोवरम्' इति उक्तवान् अस्ति एतत् दृष्ट्वा । 'काश्मीरस्य किरीटे स्थितं रत्नम्' इत्यपि एतत् सरोवरं वर्णितवन्तः सन्ति केचन । दालूसरोवरं शिकरा-नौकागृहाणां निमित्तम् अपि प्रसिद्धम् अस्ति । अत्रत्यानि दृश्यानि आदिनं परिवर्तनशीलानि । प्रति-किलोमीटरदूरे सरोवरं भिन्नं रूपम् आप्नोति । एतस्य सरोवरस्य तीरे वैभवपूर्णानि उद्यानानि सन्ति ।

साहसिनः पर्वतारोहणार्थं, हिमे स्खलनक्रीडार्थं चापि अत्र आगच्छन्ति । अत्रत्यपर्वतानि बह्वीनां नदीनां च उत्पत्तिस्थानानि । राज्ये बह्व्यः नद्यः वहन्ति ।

तौ नगरस्य सीमान्तं प्राप्तवन्तौ । रहमानः तस्मिन् एव नगरे वसति स्म । सः हुसेनम् उद्दिश्य - ''भोः ! युवक, यदा भवान् अत्र आगच्छति तदा अवश्यं मम गृहे तिष्ठतु । भवतः हार्दं स्वागतम्'' इति उक्तवान् ।

उत्तररूपेण हुसेनः - ''भवतः उदारतायाः निमित्तं धन्यवादाः । रात्रितः पूर्वम् अहं भवतः गृहे उपस्थितः भविष्यामि । किन्तु महोदय ! भवतः गृहस्य आधारस्तम्भाः दृढाः सन्ति खलु !'' इति पृष्टवान् । एतत् श्रुत्वा रहमानः मनसि एव हसितवान् ।

अनन्तरं सः गृहं गत्वा पुत्र्याः झोहरायाः



पुरतः विलक्षणस्य सहप्रयाणिकस्य विषयं विवृतवान् । तेन पृष्टान् विचित्रान् प्रश्नान् अपि श्रावितवान् । अन्ते सः – ''अहं तं गृहं प्रति यदा आहूतवान् तदा सः अस्माकं गृहस्य स्तम्भानां विषये पृष्टवान् आसीत् । सः निश्चयेन मूर्खः इति भाति मम'' इति उक्तवान् ।

तदा झोहरा आश्चर्यं प्रकटयन्ती – ''पितः, सः न मूर्खः, प्रत्युत महाबुद्धिमान् एव इति भाति मम'' इति उक्तवती ।

तदा रहमानः – ''सः बुद्धिमान् इति भवती कथं जानाति ? तस्य प्रश्नाः एव तस्य मूर्खतां द्योतयन्ति खलु ?'' इति उक्तवान् ।

तदा झोहरा उक्तवती – ''पितः, तथा न । आधारस्तम्भानां विषयं पृच्छन् सः पृष्टवान् यत् भवन्तः मम सत्कारं कर्तुं समर्थाः खलु इति'' इति ।

पुत्र्याः वचनैः रहमानः प्रभावितः अभवत् । 'हुसेनस्य विचित्रप्रश्नानाम् अर्थं पुत्री जानीयात् । न जाने कदाचित् हुसेनः बुद्धिमान् स्यात् अपि' इति चिन्तितवान् सः ।

सः पुत्रीम् उद्दिश्य – '' एवं तर्हि परस्परयोः भारवहनम् इत्यस्य कः अर्थः स्यात् ?'' इति पृष्टवान् ।

''तस्य अर्थः – समययापनार्थं पर्यायरूपेण कथाकथनम्'' इति उक्तवती झोहरा ।

पुनश्च रहमानः पृष्टवान् – ''धान्यानि खादनयोग्यानि वा इत्यस्य द्वितीयप्रश्नस्य कः अर्थः ?'' इति ।

झोहरा हासं निगृह्णती – ''पितः ! कृषकेण सता भवता एतस्य प्रश्नस्य उत्तरं ज्ञातव्यम् आसीत् । किं भवान् ऊहितुं न शक्तः ? यदा कृषकाः उत्पादनाशुल्कं दातुम् असमर्थाः भवन्ति तदा शुल्कस्वीकर्तारः धान्यं स्वायत्तीकुर्वन्ति । तदा धान्यं किं खादनयोग्यं

## एवं हि श्रूयते...

काचित् प्रसिद्धा कथा सूचयति – ''समग्रः काश्मीरप्रदेशः पूर्वं महत् सरोवरम् आसीत् समुद्रवत् । तत्र कश्चित् प्रचण्डः राक्षसः वसति स्म । कश्यपनामकः ऋषिः महता परिश्रमेण तत्रत्यं जलं निष्कास्य राक्षसस्य मारणे साहाय्यं कृतवान् । कश्यपः ब्रह्मणः पौत्रः । तदा पार्वती तस्य राक्षसस्य उपरि पर्वतं पातयित्वा मारितवती । सः पर्वतः एव हरिपर्वतनाम्ना इदानीं प्रसिद्धः अस्ति । श्रीनगरस्य सौन्दर्यं वर्धयन् विराजमानः अस्ति सः पर्वतः ।''

भवेत् ?'' इति उक्तवती ।

तदा रहमानः पुनः पृष्टवान् - ''तदस्तु तावत्, सः नगरं श्मशानम् इति, श्मशानं च नगरम् इति च उक्तवान् खलु !'' इति ।

''तस्य दृष्ट्या यत्र दयालवः, करुणालवः च वसन्ति तत् नगरम् एव 'नगरम्' इति कथयितुं योग्यम् । यत्र एतादृशगुणानां न्यूनता दृश्यते तत् श्मशानसमानम् । नगरम् इति कथनं जनानां संख्यायाः आधारेण न भवति । तेन श्मशाने विपरीतम् एव अभिलक्षितम् । अतः सः नगरं श्मशानम् इति, श्मशानं नगरम् इति च उक्तवान्'' इति उक्तवती झोहरा ।

''भवत्याः विवरणात् स्पष्टं यत् सः बुद्धिमान् पुरुषः एव इति'' इति उक्तवान् रहमानः ।

झोहरा हुसेनेन मेलितुम् उत्सुका आसीत् । वचनदानानुसारं हुसेनः रात्रौ भोजनार्थं रहमानस्य गृहम् आगतवान् ।



''भवतः प्रवासस्य किं कारणम् ?'' इति पृष्टवती झोहरा ।

हुसेन हसतः मत्स्यस्य कथां, राज्ञः दण्डनविषयं च विवृतवान् । झोहरा आश्चर्येण - ''एषा समस्या अतीव सरला खलु ! एतस्य अर्थः - राजप्रसादे

# करकौशलवस्तूनि



सुन्दरकटानां निमित्तं प्रसिद्धम् अस्ति काश्मीर-प्रदेशः । एते कटाः हस्तनिर्मिताः भवन्ति । ऊर्णं दुकूलं च मूलवस्तुरूपेण उपयुज्य कटाः निर्मीयन्ते । विशिष्टविन्यासैः वर्णसंयोजनेन च एतान् कटान् वयन्ति तत्रत्याः ।

काश्मीरीयराङ्कवाः अपि अत्यन्तं प्रसिद्धाः सन्ति । तथैव कागदनिर्मितवस्तूनि, वयनवस्तूनि, वेणुनिर्मितवस्तूनि, काष्ठवस्तूनि इत्यादीनि अपि तत्रत्यानि अतिप्रसिद्धानि । 'शाहतुश्'नामकः काश्मीरीयराङ्कवः स्वस्य वयनविन्यासेन, मार्दवेन, औष्ण्यजनकत्वेन च सुप्रसिद्धः अस्ति ।

केचन राङ्कवाः तादृशाः तनुगात्राः भवन्ति, ये च अङ्गुलीयकस्य अन्तः प्रवेशयितुम् अपि शक्याः । एषु दिनेषु शाहतुश्राङ्कवस्य निर्माणं निषेधितम् अस्ति । यतः तस्य निर्माणार्थं यस्य अजस्य उपयोगः क्रियते तस्य सन्ततिः विनाशसमीपे अस्ति ।

एव कश्चित् राजानं हन्तुं योजनां कुर्वन् अस्ति इति'' इति उक्तवती ।

स्वसमस्यायाः समाधानं प्राप्तवान् हुसेनः झोहरया रहमानेन च सह स्वनगरं प्रति प्रस्थितवान् ।

राज्ञः समीपं गत्वा हुसेनः – ''महाराज ! वयं समस्यायाः समाधानं प्राप्तवन्तः स्मः । एषा बालिका झोहरा सर्वं विवृणोति'' इति उक्तवान् ।

''महाराज ! यः मत्स्यः तदा हसितवान् आसीत् सः देवमत्स्यः । सूच्यरूपेण सः मत्स्यः हसितवान् आसीत् । सः परोक्षरूपेण भवन्तं जागरयितुम् इच्छति स्म । कश्चित् पुरुषः महिलावेषेण प्रासादे अस्ति । सः भवतः घातकः भविष्यति'' इति उक्तवती झोहरा ।

''किं भवती एतत् प्रमाणीकर्तुं शक्नुयात् ?'' इति पृष्टवती राज्ञी ।

## प्रवासिकेन्द्राणि

''केसरम्' एकम् उपस्करम् । तत् विशिष्टस्वादार्थं सुगन्धार्थं च प्रसिद्धम् अस्ति । काश्मीरप्रदेशे बाहुल्येन केसरस्य वर्धनं भवति । प्रमुखरूपेण पाम्पोरप्रदेशे, श्रीनगरं परितः च एतस्य वर्धनम् आधिक्येन दृश्यते । स्पेनदेशं विहाय जगति एतत् एकम् एव स्थानम् अस्ति यत्र केसरस्य वर्धनं भवति । वर्षे एकवारमेव केसरपुष्पाणि विकसन्ति । नारङ्गवर्णीयानि केसरदलानि सङ्गृह्य शोष्यते । तदेव अत्यन्तं मूल्यवत् केसरम् ।

काश्मीरप्रदेशस्य वातावरणं वातामस्य अक्रोडस्य च वर्धनार्थं योग्यम् अस्ति । राज्ये बाहुल्येन एते वृक्षाः दृश्यन्ते ।



तदा हुसेनः – ''महाराज्ञि ! वयं परीक्षां करवाम तावत्'' इति उक्तवान् ।

राजा राज्ञी च सेविकानां परीक्षणम् अङ्गीकृतवन्तौ ।

हुसेनः एकं विशालं गभीरं च गर्तं कारितवान् । गर्तस्य उपरिष्टात् लङ्घनं कर्तुं सर्वाः सूचितवान् । एकां विहाय कापि गर्तम् अतिक्रान्तुं न शक्तवती । सः एव पुरुषः इति ज्ञातम् । सः राज्ञः हननार्थम् अवकाशं प्रतीक्षमाणः आसीत् ।

राजा फिरोजशाहः, राज्ञी शकिला च सन्तुष्टौ जातौ । तौ राज्ञः प्राणान् रक्षितवतीं झोहरां हुसेनं च पुरस्कृतवन्तौ । झोहरा-हुसेनयोः विवाहः सम्पन्नः । योग्यः जामाता लब्धः इत्यतः रहमानः अपि सन्तुष्टः अभवत् ।



# ऋणदाता

गणपतिः कश्चन बुद्धिमान् पुरुषः । कदाचित् तस्मै सहस्रं रूप्यकाणि आवश्यकानि अभवन् । सः चिन्तितवान् यत् पार्श्वग्रामस्थः सुहृत् चन्दनः अवश्यं साहाय्यं करिष्यति इति । अतः सः चन्दनस्य गृहं गतवान् । किन्तु चन्दनस्य स्थितिः अपि कष्टकरी एव आसीत् ।

एतत् ज्ञात्वा गणपतिः उक्तवान् – ''अस्माकं ग्रामः श्रमिकबहुलः । भवतः ग्रामस्तु धनिकबहुलः । तथापि आर्थिकक्लेशम् अनुभवति खलु भवान् ! किम् अत्र भवते ऋणं दातुम् अर्हः कोऽपि नास्ति ?'' इति ।

तदा चन्दनः अवदत् – ''कुतो न ? अस्मद्ग्रामनिवासी दिवाकरः दानशूरकर्णः इत्येव प्रसिद्धः । किन्तु तस्य स्वभावः विलक्षणः । कदाचित् दशसहस्रं रूप्यकाणि दानरूपेण ददाति सः । क्वचित् द्विशत-रूप्यकाणाम् ऋणदानम् अपि निराकरोति । अतः तस्य मनस्स्थितेः अवगमनम् एव क्लेशाय'' इति ।

एतत् श्रुत्वा गणपतिः आश्चर्यान्वितः जातः । 'यः दशसहस्ररूप्यकाणां दाने अपि समर्थः सः द्विशतरूप्यकाणाम् ऋणदानं किमर्थं वा निराकरोति ?' इति चिन्तयन् सः कस्मै कस्मै तेन ऋणं दत्तं, कस्मै ऋणदानं निराकृतम् इत्यादिकं विवरणं चन्दनं पृष्ट्वा ज्ञातवान् ।

सर्वं विवरणम् उक्त्वा चन्दनः अपृच्छत् – ''एतत्सर्वं ज्ञात्वा किं करिष्यति भवान् ?' इति ।

''सर्वस्यापि मानवस्य व्यवहारस्य पृष्ठ-भूमिकायां किमपि एकं कारणं भवति । तत् अवगतं चेत् कार्यं सुकरम् । अतः विवरणं पृष्टं मया । अहं दिवाकरवर्येण मेलितुम् इच्छामि'' इति उक्त्वा गणपतिः ततः निर्गतवान् ।

यदा सः दिवाकरस्य गृहं गतवान् तदा दिवाकरः पुष्पोद्याने आसीत् । सः पुष्पप्रियः । अतः अपूर्वाणि पुष्पसस्यानि सः स्वस्य उद्याने वर्धयति स्म । गणपतिः दिवाकरसमीपं गत्वा तस्य उदारतायाः प्रशंसां कृत्वा स्वस्य परिचयम् उक्तवान् ।

''भवान् चन्दनस्य मित्रम् ! चन्दनः मम सुहृत् एव । भवता सह किमर्थं न आगतं तेन ?'' इति अपृच्छत् दिवाकरः ।

''अहं पाटलपुष्पप्रियः । भवतः उद्याने विविधानि पाटलपुष्पाणि सन्ति इति श्रुत्वा अहं धावन् अत्र आगतः । अहो, तत्र दृश्यते खलु नीलपुष्पम् ! तदेव आ बहोः कालात् अन्विष्यते स्म मया'' इति अवदत् गणपतिः ।

''तस्य पुष्पस्य किं वैशिष्ट्यम् ?'' इति कुतूहलेन पृष्टवान् दिवाकरः ।

तदेव पुष्पं पश्यन् अवदत् गणपतिः - ''दशभिः जनैः सम्भूय एतस्य स्पर्शः करणीयः । ततः जले स्थापयित्वा उष्णीकृत्य तत् जलं पातव्यम् । तत् जलं परमपुण्यदम् । तस्य पानात् कैलासदर्शनम् एव प्राप्तम् इव'' इति ।

दिवाकरः पञ्चाङ्गम् आनीय परिशीलितवान् । स च कालः उत्तमः आसीत् ।

''एतस्मात् सिद्धं यत् शुभफलाय एव आवयोः मेलनम् इदानीं जातम् इति । भवान् प्रतिवेशिनः सप्त जनान् आनाययतु । अहं चन्दनम् अत्र आनयामि । वयं दश जनाः मिलित्वा एतस्य स्पर्शं करवाम, पुण्यं च सम्पादयाम'' इति उत्साहेन अवदत् गणपतिः ।

ततः दिवाकरेण सप्त प्रतिवेशिनः आहूताः । गणपतिना चन्दनः आनीतः । दश अपि तत् स्पृष्टवन्तः । ततः तत् जले स्थापितम् । जलं च उष्णीकृतम् । तत् जलं दशभिः अपि [illegible] पीतम् । दिवाकरपरिवारीयैः अपि तत्



सेवितम् ।

तस्मिन् एव समये गणपतिः चन्दनं मन्दस्वरेण अवदत् - "इदानीं भवान् दिवाकरतः पञ्चसहस्रं रूप्यकाणि ऋणरूपेण याचतु । सहस्रं रूप्यकाणि मह्यं दत्त्वा अवशिष्टं भवान् स्वसमीपे स्थापयतु । निस्सङ्कोचं तम् ऋणं पृच्छतु भवान् । यदि सः न दद्यात् तर्हि अहं भवते दशसहस्रं रूप्यकाणि दास्यामि" इति ।

सङ्कोचं प्रदर्शयन् एव चन्दनः ऋणं प्रार्थितवान् । तदा दिवाकरः - "अत्र सङ्कोचकरणस्य का आवश्यकता ? येन दानं क्रियते तस्य ऋणरूपेण धनदाने कः क्लेशः ? भवान् दानं प्रार्थयन् इव सङ्कोचेन व्यवहरति । मित्राय काले ऋणस्य दानं मम कर्तव्यम् एव । आवश्यकं चेत् दशसहस्रं रूप्यकाणि एव स्वीकरोतु" इति अवदत् ।

"पञ्चसहस्रं रूप्यकाणि एव मह्यं ददातु । दशसहस्ररूप्यकाणाम् आवश्यकता नास्ति मम" इति उक्त्वा पञ्चसहस्रं रूप्यकाणि स्वीकृतवान् चन्दनः ।

अनन्तरं चन्दनः गणपतिः च ततः निर्गतौ । गृहम् आगतः चन्दनः गणपतये एकसहस्रं रूप्यकाणि दत्त्वा अवदत् - "भवतः कथनम् अनुसरन् अहम् ऋणं प्रार्थितवान् । तथापि मम भीतिः आसीत् एव यत् सः 'न' इति वदेत् इति । सः ऋणं दद्यात् एव इत्यत्र भवतः कथं विश्वासः आसीत् ?" इति ।

"दिवाकरः प्रसिद्धिकांक्षी । जनाः यदा भवन्ति तदा यत्किमपि ददाति सः । जनाः तं दानशूरं वदेयुः इति तस्य इच्छा । एकाकी यदा सः भवति तदा पृष्टं चेत् सः किमपि न ददाति । येभ्यः तेन ऋणं न दत्तं तस्य कारणम् एतत् एव आसीत् । दिवाकरः बुद्धिमान् अपि । जनानां पुरतः कदापि ऋणदानस्य निराकरणं न करोति सः । अतः एव मया दश जनाः मेलिताः । ऋणं प्रार्थयतु इति भवान् सूचितः च । मम उपायः फलितः" इति अवदत् गणपतिः ।

"अहो, बुद्धिमत्ता भवतः । उपायचतुरः भवान् !!" इति प्रशंसपूर्वकम् उक्तवान् चन्दनः ।






# विघ्नेश्वरः

"विघ्नेश्वर ! इदानीं भवता गजासुरस्य संहारः कृतः । एतस्य स्मरणार्थं गणपतिनवरात्रोत्सवः चिरकालं यावत् सवैभवम् आचरिष्यते । इतः अग्रे जनाः किमपि कल्याणकारि कार्यं यदा करिष्यन्ति तदा भवतः उत्सवम् अपि आचरिष्यन्ति, सफलतां च प्राप्स्यन्ति" इति अशरीरवाणी श्रुता । एतत् श्रुत्वा विष्णुः विघ्नेश्वरम् उक्तवान् - "पार्वतीनन्दन ! भवान् मम भागिनेयः अस्ति । अतः मम दायित्वानि वर्धमानानि सन्ति" इति ।

तदा गणपतिः उक्तवान् - "आम् । भवान् अग्रे कंसस्य भागिनेयसम्बन्धं प्राप्य तं संहरिष्यति खलु ? राक्षससंहारविद्या तु भवता एव बोधिता" इति ।

"हे विघ्नविनाशक ! स्यान्नाम तथा । किन्तु भवतः परशोः सामर्थ्यात् मम चक्रायुधं सर्वथा अवरम् । भवतः परशोः कौशलं दृष्टवतः मम महान् आनन्दः भवति" इति अवदत् विष्णुः ।

एतत् श्रुत्वा विघ्नेश्वरः अवदत् - "मम परशोः ग्रहणे इच्छा भवतः । अतः एव भवान् अग्रे परशुरामावतारं प्राप्य मम परशुं गृहीत्वा गर्वोद्धतान् क्षत्रियान् नाशयिष्यति" इति ।

"विघ्नेश्वर ! गजरूपिणः विघ्नासुरस्य उपरि स्थित्वा भवान् पादाभ्यां यदा मर्दयन् आसीत् तदा अहं भवतः वामनरूपं दृष्ट्वा आनन्दाब्धौ निमग्नः" इति अवदत् विष्णुः ।

"भवान् अपि अग्रे कदाचित् वामनावतारं प्राप्य बलिचक्रवर्तिनं पादाघातैः पातालं प्रेषयिष्यति" इति अवदत् विघ्नेश्वरः ।



''भवतः बुद्धिः वर्णनातीता अस्ति'' इति अवदत् विष्णुः ।

''भवतः अवताराणाम् उद्देशः धर्मस्य स्थापनम् । यदा समाजे अन्धविश्वासहिंसादयः प्रवृद्धाः भविष्यन्ति तदा भवान् बुद्धः सन् योग्यस्य सामाजिकजीवनस्य निर्वाणस्य च उपदेशं करिष्यति । मायादेव्याः स्वप्ने श्वेतगजः गर्भं प्रविष्टवान् दृश्यते तदा । ततः भवान् सिद्धार्थनाम्ना जन्म प्राप्स्यति'' इति अवदत् गणपतिः ।

एतस्य संवादस्य कारणतः विष्णुः नितरां सन्तुष्टः । ततः परमाणुरूपेण स्थितः विघ्नः अवदत् – ''हे विघ्नराज ! अहं भवतः दासः अस्मि । मया इदानीं किं करणीयम् इति आदिश्यताम् । भवतः आज्ञाम् अक्षरशः पालयिष्यामि अहम्'' इति । ततः सः विघ्नेश्वरस्य अनुज्ञां प्राप्य कालिन्दीतटाकं प्राप्य कालियरूपेण तत्र न्यवसत् ।

विघ्नस्य निर्गमनस्य अनन्तरं मूषकासुरः मूषकरूपेण तत्र आगतवान् । कालियवेषेण अज्ञाततया वासं कुर्वतः विघ्नस्य स्थितिं दृष्ट्वा नितरां खिन्नः क्रुद्धः च सः स्वस्य नैजं रूपं धृत्वा विघ्नेश्वरस्य पुरतः तिष्ठन् सिंहनादं कृतवान् ।

विघ्नेश्वरः मूषकासुरस्य बलयुतं देहं सन्तुष्टिपूर्वकं दृष्टवान् । मूषकासुरः अट्टहासं प्रकटयन् – ''अये विघ्नेश्वर ! विघ्नः तु भवतः दासः । अतः यथा भवतः आज्ञा तथा व्यवहारः तदीयं कर्तव्यम् । किन्तु अहं तु भवतः दासः नास्मि, प्रत्युत शत्रुः अस्मि । भवान् 'सिंहस्वप्न'शब्दं श्रुतवान् स्यात् खलु ? अहं सिंहः भूत्वा भवतः गण्डस्थलं विदारयिष्यामि'' इति उक्त्वा सिंहरूपं धृत्वा उच्चैः गर्जनं कृतवान् ।

एतत् श्रुत्वा विघ्नराजः अवदत् – ''हे सिंह ! भवान् जगज्जनन्याः वाहनम् । अतः अहं भवन्तम् आदरेण एव पश्यामि'' इति ।

किन्तु सिंहः विघ्नेश्वरस्य आदरभावं तृणीकृत्य आक्रमणार्थम् आगतः । तदा विघ्नेश्वरः उपविश्य एव – ''हे शिव ! हे शम्भो !'' इति अवदत् । अनन्तरक्षणे एव शिवः शरभावतारं प्राप्य सिंहस्य पुरतः स्थित्वा अगर्जत् । शरभस्य शरीरं सिंहवत् आसीत् । तस्य कण्ठे केसराः आसन् । किन्तु मुखं गजस्य इव । दीर्घा शुण्डा आसीत् मुखे । उभौ हस्तौ अपि आस्तां तस्य । तदीयं पुच्छं सर्पाकारकम् । पुच्छस्य अन्ते अग्निम्

उद्गमत् मकरमुखम् आसीत् । शरभः सकृत् गर्जनं कृत्वा स्वशुण्डया सिंहं मुखे बलात् प्राहरत् । तदा सिंहः क्रन्दन् ततः पलायनम् अकरोत् । शरभस्तु अदृश्यतां गतः ।

विघ्नेश्वरः स्वस्य शुण्डां दीर्घतया प्रसार्य धावतं सिंहं झटिति गृहीतवान् । तम् उन्नीय अतिष्ठत् च । तस्मिन् समये नारदः आकाशे स्थित्वा हिन्दोलरागेण गीतवान् ।

एतत् दृश्यं द्रष्टुं देवाः सर्वे सम्मिलिताः । विष्णुः अपि तत्र उपस्थाय अवदत् - ''अये विघ्नेश्वर ! भवान् यं सिंहम् उन्नीतवान् अस्ति तम् अहं पालयितुम् इच्छामि । किं भवान् तं मह्यं दद्यात् ?'' इति ।

तदा विघ्नेश्वरः हसन् अवदत् - ''सिंह-पालनव्याजेन तदीयं शिरः नखान् च धृत्वा नरसिंहावतारं प्राप्य हिरण्यकशिपोः उदरं विदारयितुम् इच्छति भवान् । एवं ननु ? किन्तु अयं मृगराजः मह्यम् अपि आवश्यकः । अतः नरसिंहावताराय भवान् अन्यं कञ्चित् मार्गम् अवलम्बितुम् अर्हति'' इति ।

ततः विघ्नेश्वरस्य शुण्डा सिंहं महाश्वेतायाः पुरतः अपातयत् । एतस्य अपमानस्य कारणतः महाश्वेतायाः पतिः विघ्नेश्वराय अक्रुध्यत् । महाश्वेता विविधैः प्रकारैः पतिं शान्तिं बोधयितुं प्रयत्नं कृतवती । किन्तु तस्याः पतिः तस्याः वचनानि अशृण्वन् नैजरूपेण गत्वा विघ्नेश्वरं सम्मुखीकर्तुं ततः निर्गतवान् । असहाया महाश्वेता देवीं प्रार्थितवती । तदा देवी प्रत्यक्षी-भूय अवदत् - ''भवत्याः पतिः चिरञ्जीवी । सः मूषकरूपेण तिष्ठन् विघ्नेश्वरस्य सेवां करिष्यति । भवती अपि श्वेतच्छत्रतां प्राप्य



चिरकालं विघ्नेश्वरस्य सेवां करोतु'' इति ।

वज्रदन्तः कामरूपी आसीत् । अतः सः गण्डभेरुण्डपक्षिणः रूपं धृत्वा मार्गे गच्छन्तौ उभौ गजौ स्वनखाभ्यां गृहीत्वा गच्छन् आसीत् । तदवसरे यः कोलाहलः प्रवृत्तः तस्य कारणतः गृध्ररूपं धृत्वा हरेः नामस्मरणं कुर्वतः गरुडस्य अवधानभङ्गः जातः । क्रुद्धः सः स्वस्य चञ्च्वा गण्डभेरुण्डं प्राहरत् । तस्मात् व्रणितः वज्रदन्तः नैजरूपेण भूमौ अपतत् ।

मूषकासुरः विघ्नेश्वरसमीपं गत्वा अवदत् - ''भवान् तु दीर्घौ दन्तौ धरति । किन्तु किं ताभ्यां दन्ताभ्याम् ? तौ तु केवलं कपित्थ-फलस्य खादने उपयुज्येते । मम दन्तौ तु वज्रम् अपि चूर्णीकर्तुं समर्थौ । कैलासपर्वतम् अपि धूलिसात्कर्तुं समर्थौ तौ'' इति ।

विघ्नेश्वरः तम् उपेक्षादृष्ट्या पश्यन् -



''भवता यथा उक्तं तथा एतौ दन्तौ सर्वथा निरर्थकौ । किम् एतयोः धरणेन ?'' इति उक्त्वा एकं दन्तं भञ्जयित्वा तं मूषकासुरदिशि क्षिप्तवान् । स च दन्तः आकाशे भ्रमन् अग्रे गत्वा वज्रदन्तं निरन्तरं प्राहरत् । वज्रदन्तस्य शरीरात् रक्तधारा निर्गता । महाश्वेता एतत् दृश्यं द्रष्टुम् अशक्नुवती मूर्च्छां गतवती । वज्रदन्तः अपि तस्य दन्तस्य प्रहारान् सोढुम् अशक्नुवन् मूषकरूपं प्राप्य शिलानां मध्ये स्थितं बिलं प्रविष्टवान् ।

बिलं प्रविष्टवन्तं तं दन्तः अपि अन्वसरत् । समग्रायां पृथिव्यां सः राक्षसः अधावत् । दन्तोऽपि निरन्तरं तम् अनुसरन् प्राहरत् । अन्ते अनन्यगतिकः सः राक्षसः विघ्नेश्वरं शरणं गत्वा अवदत् - ''महानुभाव ! मम मरणं तु नास्ति । भवतः दन्तः निरन्तरं मां प्रहरन् पीडयति । इदानीम् एतस्याः पीडातः मां विमुक्तं कर्तुं भवान् एकः एव समर्थः । अहं शरणागतः अस्मि'' इति । तदा विघ्नेश्वरः मन्दहासपूर्वकम् अभयं दत्त्वा तं दन्तं स्वहस्तेन गृहीतवान् ।

ततः सः मूषकासुरम् उद्दिश्य - ''हे मूषकासुर ! भवान् सामान्यः मूषकः इव दृश्यते चेदपि भवतः बलं तु असाधारणम् । कूर्मावतारावसरे मन्दरपर्वतं, वराहावतारे समग्रां भूमिं च उन्नीतवतः महाविष्णोः सामर्थ्यात् अपि भवतः सामर्थ्यम् अधिकम् । योग्यस्य वाहनस्य अभावात् अहम् अपि एतत् लम्बोदरोपेतं शरीरं धृत्वा सर्वत्र अटितुं न शक्नोमि । अतः भवादृशः ....'' इति वदन् अर्धोक्त्या एव स्वस्य कथनं स्थगितवान् ।

किन्तु मूषकासुरस्तु विघ्नेश्वरस्य प्रशंसां प्राप्य सन्तुष्टः सन् - ''भगवन् ! भवतः दन्तः मम अज्ञानम् अनाशयत् । भवतः वाहनत्वप्राप्तिः तु सौभाग्याय एव । अतः अहं विशालकायः सन् भवन्तं वक्ष्यामि'' इति उक्त्वा गजसदृशः मूषकः अभवत् ।

विघ्नेश्वरः तम् आरोढुं तदुपरि स्वस्य पादं स्थापितवान् । किन्तु तावता एव तं भारं वोढुम् असमर्थः मूषकासुरः आक्रन्दनं कृतवान् । तदा विघ्नेश्वरः हसन् - ''वत्स ! मूषक ! भवान् लघुमूषकरूपेण तिष्ठति चेदेव अहं विनायासं भवन्तम् आरोढुं शक्नुयाम् । भवान् अपि तदा एव मम भारं वोढुं शक्नुयात् । अतः लघ्वाकारः एव सर्वदृष्ट्या अपि शोभावहः'' इति अवदत् ।

मूषकासुरः लघुरूपं प्राप्य विघ्नेश्वरं स्वपृष्ठे



आरोप्य वेगेन सर्वत्र परिक्रमणं कृत्वा अवदत् – ''भगवन् ! प्रयाणसमये मम तु भासते स्म यत् मदुपरि कोऽपि नास्ति एव इति'' इति ।

एतदभ्यन्तरे धवला सचेतना जाता । सा विघ्नेश्वरं प्रणम्य अवदत् – ''देव ! मम पतिः लघुमूषकरूपेण भवतः वाहनं भूत्वा तिष्ठति । भवतः सेवाभाग्यं ममापि भवतु । श्वेतच्छत्रतां प्राप्य अहं भवते छायां कल्पयितुं यथा शक्नुयां तथा वरेण अनुगृह्णातु'' इति ।

तदा प्रसन्नः विघ्नेश्वरः अवदत् – ''अस्तु नाम । श्वेतच्छत्रं शीतलच्छाया च रक्षाकवचः भवतु मम'' इति ।

ततः सः मूषकं दृष्ट्वा अवदत् – ''हे वज्रदन्त ! मम वाहनरूपेण तिष्ठतु भवान् । भवतः पुरतः देवाः मानवाः च त्रिवारम् उपवेशनोत्थानं करिष्यन्ति । तस्य दर्शनात् भवतः अपि सन्तोषः भवेत्'' इति ।

''भवतु देवदेव ! ममापि मनसि एतादृशी एव इच्छा आसीत् । यदा अहं वज्रदन्तरूपेण आसं तदा सर्वे देवाः अपि भीत्या एवमेव कुर्वन्ति स्म । इदानीं तु आदरेण ते तथा करिष्यन्ति । भवतः वाहनत्वं प्राप्तवान् अहं निश्चयेन धन्यः अस्मि'' इति अवदत् मूषकः ।

एतदनन्तरं धवला श्वेतच्छत्रतां प्राप्य विघ्नेश्वरस्य पीठम् अलङ्कृतवती । एवं तस्मात् दिनात् विघ्नेश्वरः मूषकवाहनः श्वेतच्छत्रविभूषितः च जातः ।

एतत् दृष्ट्वा विष्णुः कदाचित् उक्तवान् – ''हे एकदन्त ! भवतः वाहनं दृष्टवतः मम ईर्ष्या जायते । अहो, कीदृशम् उत्तमं वाहनं प्राप्तम् अस्ति भवता !'' इति ।

तदा विघ्नेश्वरः उक्तवान् – ''मम वाहनं कल्क्यवतारसमये श्वेताश्वत्वं प्राप्य भवतः वाहन विष्यति । अन्तरिक्षे सञ्चरन् सः ग्रहान्

प्रति गन्तुम् अपि समर्थः भविष्यति'' इति ।

''भवतः वाणी सार्थकतां प्राप्नोतु'' इति विष्णुः परमानन्देन उक्तवान् ।

तदा तत्र उपस्थितः नारदः उक्तवान् - ''विघ्नेश्वर ! अद्यावधि भवत्सहितस्य विष्णोः नव अवताराः समाप्ताः सन्ति । इतोऽपि एकः अवतारः अवशिष्टः अस्ति'' इति ।

तदा विष्णुः नारदं पश्यन् उक्तवान् - ''अचिरात् एव कश्चन विवाहः सम्पत्स्यते । तदा एव भवता भाविनः अवतारस्य स्वरूपम् अपि ज्ञास्यते । अतः अलं त्वरया'' इति ।

''कोऽयं विवाहः भगवन् ! विस्तरेण उच्यताम्'' इति अवदत् नारदः ।

''विवाहः कल्याणचक्रवर्तिनः विजयिनः विघ्नेश्वरस्य '' इति अवदत् विष्णुः ।

तदा विघ्नेश्वरः अवदत् - ''स च विवाहः सहस्त्रविघ्नानाम् अनन्तरं खलु ?'' इति ।

''अस्तु नाम । तदनन्तरम् एव वा भवतु । किन्तु ततोऽपि अग्रे तु न सारणीयम्'' इति अवदत् विष्णुः ।

''सहस्त्रविघ्नानाम् अनन्तरं विघ्नेश्वरस्य विवाहः । न जाने, तदर्थं कियान् कालः आवश्यकः इति । तथापि विवाहः तु स्यादेव'' इति वदन् नारदः त्रिलोकीपरिभ्रमणाय ततः प्रस्थितः ।

अन्यत्र शिवपार्वत्योः मोहानुरागः तेजोरूपेण परिवृत्तः । तच्च तेजः स्वीकृत्य अग्निदेवः शरवणे परित्यक्तवान् । तत्र षड्भिः मुखैः युक्तस्य कुमारस्वामिनः जन्म जातम् । षट् ऋषिपत्न्यः तं पालयित्वा शिवपार्वत्योः कृते अर्पितवत्यः । क्रमेण वर्धमानः कार्तिकेयः ज्येष्ठतां प्राप्तवान् । गरुडः तस्मै मयूरवाहनं दत्तवान् । इन्द्रः तस्मै अनेकानि आयुधानि दत्तवान् । पार्वती एकं शक्तिशालि शूलं दत्तवती । यथा यथा कुमारस्वामी वर्धमानः आसीत् तथा तथा तारकासुरस्य भीतिः अपि वर्धमाना आसीत् । सः पुनः पुनः दुःस्वप्नान् पश्यति स्म ।

कुमारस्वामी महत् तपः कृतवान् । ब्रह्मज्ञानं प्राप्य सुब्रह्मण्यस्वामी इति नाम प्राप्तवान् । कुमारस्वामी विघ्नेश्वरः च शिवपार्वत्योः आनन्दं वर्धयन्तौ कैलासे विहरन्तौ विविधाभिः क्रीडाभिः गीतैः च कालं यापयन्तौ आनन्देन प्रवर्धमानौ जातौ ।








# ज्ञायते - न ज्ञायते

मङ्गलपुरीराज्यं मायावर्मा नाम राजा पालयति स्म । तदीयः मन्त्री यदा दिवङ्गतः तदा तेन नूतनस्य मन्त्रिणः नियुक्तिः न कृता । 'मन्त्रिणः अभावे एव अहं राज्यं पालयिष्यामि' इति चिन्तितवान् सः ।

वेषपरिवर्तनं कृत्वा देशे अटनतः प्रजानां सुखदुःखादिकं ज्ञायते इति सः जानाति स्म । अतः सः द्वाभ्याम् अङ्गरक्षकाभ्यां सह प्रतिदिनं रात्रौ राजधान्याम् अटति स्म । किन्तु राजा महाबुद्धिमान् तु न आसीत् ।

कदाचित् राजा वेषान्तरं धृत्वा अटति स्म । एवम् अटनसमये कस्मिंश्चित् गृहे प्रवर्तमानः पतिपत्न्योः विवादः तेन श्रुतः ।

''अये, किम् एतत् कृतं भवत्या ? मया न ज्ञायते इति यदि भवती वदेत् तर्हि अहम् एव एतत् कार्यं कुर्यां खलु ?'' इति अवदत् पतिः ।

''अहो, अहम् एव कुर्याम् इति आत्मख्यापनम् ! किं जानाति भवान् ? मम अल्पः शिशुः यावत् जानाति तावदपि न ज्ञायते भवता । वृथा जल्पनम्'' इति उपेक्षया उक्तवती पत्नी ।

''अहं किमपि न जानामि इति वा भवत्याः चिन्तनम् । शिशुना मां तोलयति खलु भवती ! यदि अवकाशः लभ्येत तर्हि एतत् राज्यम् एव अहं पालयितुं शक्नुयाम् । तावत् सामर्थ्यम् अस्ति मम'' इति अवदत् पतिः ।

राजा ततः प्रत्यागतवान् । 'सर्वं जानामि इति वदति खलु एषः ! कीदृशम् अपमानकरम् एतत्' इति विचिन्त्य सः आज्ञां कारितवान् यत् 'अहं जानामि' इति केनापि न वक्तव्यम् इति ।

एषा आज्ञा यद्यपि जनानां कष्टाय जातं तथापि राजाज्ञां ते विरोद्धुं न अर्हन्ति स्म । अतः 'न जानामि' इत्येव कथनम् आरब्धवन्तः ते । गच्छता कालेन तथा कथनम् एव तेषां प्रवृत्तिः जाता ।

कदाचित् तं देशं प्रति विदेशीयौ उभौ

आगतौ । यत्किमपि पृष्टं चेदपि जनाः 'न जानामि' इत्येव यत् वदन्ति स्म तत् तेषु आश्चर्यम् अजनयत् ।

क्वचित् सम्मिलितान् जनान् दृष्ट्वा तौ तान् पृष्टवन्तौ – ''किमर्थं भवन्तः सर्वे सर्वत्र 'न ज्ञायते' इति वदन्ति ? एतस्य कारणं किम् ?'' इति ।

''अस्माभिः न ज्ञायते । वयं किमपि न जानीमः । भवन्तः यत् पृच्छन्ति तद्विषये वयं किमपि न जानीमः'' इति उक्त्वा ततः निर्गताः ते ।

''कीदृशः देशः एषः ! यत्किमपि पृच्छामः चेदपि एकम् एव उत्तरं – 'न जानीमः' इति । अहो, आश्चर्यम् ! परमाश्चर्यम् !!'' इति अचिन्तयतां तौ ।

तयोः जनानां च सम्भाषणं यदा प्रवर्तते तस्मिन् समये राजा वेषान्तरं धृत्वा तत्रैव स्थितः आसीत् । सः प्रवृत्तं सर्वं श्रुतवान् आसीत् ।

अतः अनन्तरदिने राज्ञा अन्या आज्ञा कारिता – ''राज्ये कोऽपि 'न ज्ञायते' इति कदापि न वदेत् । तथा यः वदति सः दण्ड्यते'' इति ।

प्रतिपदं 'न ज्ञायते' इति ये वदन्ति स्म ते इदानीं 'ज्ञायते' इति कथने क्लेशम् अनुभूतवन्तः । अतः ते किमपि अवदन्तः मौनम् आश्रितवन्तः । जनानां मुखं पिहितम् इव जातम् ।

विदेशीयौ यदा तस्मिन् राज्ये वसतः स्म तदा एव एतत् प्रवृत्तम् । अतः तयोः कार्यं न सम्पन्नम् एव । अतः तौ राजदर्शनार्थं गतवन्तौ । तौ राज्ञे एकं पत्रं प्रेषितवन्तौ । तत्र लिखितम् आसीत् – ''राजन् ! वयम् अन्यदेशात् अत्र आगतौ । भवतः आज्ञायाः कारणतः जनानां मुखम् इदानीं पिहितम् अस्ति । अतः आवयोः व्यवहारे विघ्नः उत्पन्नः अस्ति । भवान् आज्ञां यत् कृतवान्



तस्य पृष्ठभूमिका काचित् स्यात् एव । सा का इति यदि भवान् वदेत् तर्हि आवां वर्तमानस्थितेः परिष्कारार्थं कमपि मार्गं वक्तुं शक्नुयाव'' इति ।

एतत् पत्रं पठित्वा राजा तौ स्वसमीपम् आनाय्य आदौ दम्पत्योः सम्भाषणं यत् श्रुतं तां घटनां तयोः पुरतः विवृतवान् ।

सर्वं श्रुत्वा तौ उक्तवन्तौ - ''सः पतिः कस्मिन् अवसरे एतत् उक्तवान् इति आदौ ज्ञातव्यम्'' इति ।

ततः राजा वेषान्तरं धृत्वा ताभ्यां विदेशीयाभ्यां सह तद् गृहं गतवान्, यत्र च दम्पत्योः सम्भाषणं श्रुतम् आसीत् । राजा गृहस्वामिनम् आहूय अपृच्छत् - ''केभ्यश्चित् दिनेभ्यः पूर्वं भवान् पत्नीम् उक्तवान् आसीत् - 'अहं सर्वं जानामि' इति । किं सा घटना स्मर्यते भवता ?'' इति ।

''आम्, स्मर्यते । अहं तु गृहव्यवहार-भारम् एव निर्वोढुम् अपि न शक्नोमि । एवं स्थिते कथं वा राज्यभारं निर्वोढुं शक्नुयाम् ? 'न ज्ञायते इति वक्तव्यम्' इत्येतस्याः आज्ञायाः आगमनात् पूर्वं सा घटना प्रवृत्ता । तस्मिन् दिने मम पत्नी पाकस्य रुचिं नाशितवती आसीत् । अतः मया सा तर्जिता । तदा सा उक्तवती - 'भवान् किमपि न जानाति' इति । एतत् वचनं मम अभिमानम् अघातयत् । अतः क्रुद्धः सन् अहं किमपि उक्तवान् आसम्'' इति अवदत् सः गृहस्थः ।

''सामान्याः जनाः अविचिन्त्य यत् वदन्ति तत् एव परमसत्यं मत्वा भवान् शासननियमान् करोति । एतस्मात् प्रजानां कीदृशं कष्टं भवेत् इति न चिन्तयति । किं भवतः शासनव्यवहारे मार्गदर्शनं कर्तुं विवेकी मन्त्री कोऽपि नास्ति ?'' इति अपृच्छत् तयोः अन्यतरः विदेशीयः ।

''मम पूर्वतनमन्त्री तु दिवं गतः । नूतनः मन्त्री अद्यावधि न चितः मया । किं भवन्तौ मम मन्त्रित्वेन तिष्ठन्तौ साहाय्यं कर्तुम् अर्हतः ? भवन्तौ तु बुद्धिमन्तौ इव लक्ष्येते'' इति अवदत् राजा ।

एतत् तौ सहर्षम् अङ्गीकृतवन्तौ । मन्त्रित्वेन तिष्ठन्तौ तौ राज्ञः साहाय्यं कृतवन्तौ ।

तस्मात् दिनात् विना विघ्नं राज्यपालनं प्रवृत्तम् । प्रजाः अपि तस्मिन् राज्ये सुखेन अवसन् ।





# चोरः दामोदरः

कोसलदेशे कस्मिंश्चित् नगरे दामोदरो नाम कश्चन चोरः निवसति स्म । चौर्यकार्ये सः नितरां दक्षः । मार्जालः इव विना शब्दं सञ्चरन् सः घनान्धकारे अपि किं वस्तु कुत्र अस्ति इति ज्ञातुं शक्नोति स्म ।

चौर्यकार्ये तस्य नैपुण्यं दृष्ट्वा अन्ये चोराः तस्मै स्वपुत्रीं दातुम् उत्सुकाः आसन् । किन्तु दामोदरः वदति स्म – ''राज्ञः कोषागारं लुण्ठनीयम् इति मम लक्ष्यम् । तत् लक्ष्यं यावत् न सेत्स्यति तावत् अहं विवाहं न चिन्तयिष्यामि इति प्रतिज्ञा अस्ति मम'' इति ।

दामोदरः यत्र वसति स्म तत्र सूर्यनन्दनः नाम अन्यः निवसति स्म । सः चौर्यगणस्य प्रमुखः आसीत् । कदाचित् दामोदरः सूर्यनन्दनस्य पुत्रीं गौरीम् अपश्यत् आकस्मिकतया । गौरीसदृशी सुन्दरी अन्या काऽपि न दृष्टा आसीत् दामोदरेण । अतः तदीयं मनः गौर्यां लग्नम् । 'मया एषा एव परिणेतव्या' इति सङ्कल्पं कृतवान् सः ।

तस्य मनसि विचारः आगतः – 'राज्ञः कोषागारे चौर्यं करणीयं चेत् वर्षद्वयाधिकः कालः आवश्यकः स्यात् । एतदभ्यन्तरे गौर्याः विवाहः भवितुम् अर्हति । एतत् न भवेत् । गौर्याः परिणयविषये मया औदासीन्यं न प्रकटनीयम्' इति । अतः तस्मिन् एव दिने सः सूर्यनन्दनस्य गृहं गतवान् ।

गृहम् आगतं दामोदरं यावत् सूर्यनन्दनः किमपि प्रष्टुम् उद्युक्तः तावता दामोदरः एव अवदत् – ''मम नाम दामोदरः इति । प्रायः भवान् जानीयात् एव यत् चौर्यकलायां मत्सदृशः अन्यः कोऽपि नास्ति इति'' इति ।

तदा सूर्यनन्दनः अपृच्छत् – ''भवतः विषये मया ज्ञायते एव । इदानीं केन उद्देशेन अत्र आगतं भवता ?'' इति ।

तदा दामोदरः लज्जाम् अनुभवन् उक्तवान् – ''विवाहितः भवेयम् इति मम इच्छा ।''

एतत् श्रुत्वा हसन् सूर्यनन्दनः उक्तवान् – ''एतस्मिन् वयसि विवाहस्य चिन्तनं युक्तम्

भामहः

एव । एतस्मिन् विषये मया कीदृशं साहाय्यं करणीयम् ? किं काऽपि कन्या चिता भवता ? कुत्रत्या सा ?'' इति ।

दामोदरः आत्मनि धैर्यं प्रपूर्य अवदत् - ''भवतः पुत्र्यां गौर्यां मम अनुरागः अस्ति । ताम् एव परिणेतुम् इच्छामि अहम्'' इति ।

एतत् श्रुत्वा सूर्यनन्दनः दामोदरम् आश्चर्येण पश्यन् अवदत् - ''भवता मम पुत्री ज्ञायते ? सा सौन्दर्येण असदृशी इति तु सत्यम् एव । तस्याः बुद्धिमत्ता अपि अपूर्वा । जामातृत्वेन भवतः स्वीकारे मम आपत्तिः काऽपि नास्ति । किन्तु मम पुत्री अस्माकं वृत्तिम् अप्रशस्तां मन्यते । भवतः परिणयविषये तस्याः आशयः कः इति प्रष्टव्यं खलु मया ?'' इति । ततः सः पुत्रीम् आहूतवान् ।



पितुः मुखात् सर्वं श्रुत्वा गौरी दामोदरम् अवदत् - ''चौर्यवृत्तौ भवान् सिद्धहस्तः इति मया अपि श्रुतम् अस्ति । किन्तु भवतः सामर्थ्यं मया स्वयं परीक्षणीयं खलु ? अतः अहं यथा न जानीयां तथा मदीयं किमपि वस्तु चोरणीयं भवता । तदा एव अहं भवन्तं परिणेष्यामि'' इति ।

''तत् तु अनायासेन करिष्यामि अहम्'' इति उक्त्वा दामोदरः ततः निर्गतवान् ।

दिनद्वयानन्तरं गौरी रथयात्रार्थं पार्श्वग्रामं गमिष्यति इति वार्ता दामोदरेण ज्ञाता । अतः सोऽपि वेषान्तरं धृत्वा तत्र गतवान् । सः पाञ्चालिकाविक्रेता इव व्यवहरन् तत्र अटनम् आरब्धवान् । यदा गौरी दृष्टा तदा रहसि ताम् अनुसृतवान् । गौरी चन्द्रहारं धृतवती आसीत् । 'एतं हारं चोरयित्वा मम सामर्थ्यं निरूपणीयम्' इति सङ्कल्पम् अकरोत् सः ।

कदाचित् गौरी किमपि क्रीणती यदा आसीत् तदा दामोदरः उपायेन तस्याः कण्ठहारं चोरितवान् । जनसम्मर्दः तत्र महान् आसीत् इत्यतः तदीयं चौर्यं केनापि न लक्षितम् ।

अनन्तरदिने सः सूर्यनन्दनस्य गृहं गत्वा गौरीम् आहूय अवदत् - ''चन्द्रहारः अदृश्यतां गतः इत्यतः भवत्याः महत् दुःखं जातं स्यात् । स च हारः मया एव चोरितः । इदानीं वा सिद्धं खलु मम सामर्थ्यं कियत् इति'' इति ।

एतत् श्रुत्वा उच्चैः हसन्ती गौरी उक्तवती - ''रथयात्रायां भवान् पाञ्चालिकाविक्रेता इव वेषं धृत्वा आगतः आसीत् । तत्रैव भवता मम चन्द्रहारः चोरितः । एतत्सर्वं मया ज्ञातम् अस्ति । अतः भवतः सामर्थ्यम् अत्यल्पम् इति सिद्धम् । अन्यच्च, भवता

चोरितः हारः तु कृत्रिमः । वास्तविकः हारः मत्समीपे अस्ति'' इति ।

तस्याः वचनं श्रुतवतः दामोदरस्य हस्तात् चन्द्रहारः पतितः । सः किमपि अनुक्त्वा प्रतिनिवृत्य ततः निर्गतवान् ।

द्वित्राणि दिनानि अतीतानि चेदपि दामोदरः पुनः तत्र न आगतः । अतः गौरी एव तस्य गृहं प्रति प्रस्थितवती । दामोदरः नेत्रे निमील्य मञ्चे शयितः आसीत् ।

गौरी तम् उत्थापयन्ती उक्तवती - ''किं निराशतया सुप्तः, उत राज्ञः कोषागारस्य चौर्यार्थम् उपायः चिन्त्यते ?'' इति ।

दामोदरः शय्यातः उत्थाय मञ्चे उपविश्य अवदत् - ''राज्ञः कोषागारस्य लुण्ठनम् ! तदपि मया !! यः अहं भवत्याः चन्द्रहारस्य चौर्ये एव असफलः अभवं सोऽहं कथं वा राज्ञः कोषागारस्य लुण्ठनं चिन्तयेयम् ? महच्चौर्यं कर्तुं या बुद्धिमता आवश्यकी सा मयि नास्ति इति सिद्धम् । प्रायः लघुचौर्याणि कर्तुम् एव अहं शक्नोमि । अन्येषां मिथ्या-प्रशंसातः अहं गर्वितः आसम्'' इति ।

तदा गौरी हसन्ती उक्तवती - ''चोरः महाकुशलः स्यात् चेदपि तस्य जीवने अपायः तु कदाचित् स्यादेव । सा वृत्तिः एव निन्द्या'' इति ।

''अहं तु अन्यां वृत्तिं न जानामि । जीविकार्थं मया सा वृत्तिः आश्रिता'' इति अवदत् दामोदरः ।

''जीविकार्थं किं चौर्यम् एकः एव मार्गः ? भवान् दृढकायः । किं कृषिः कर्तुं न शक्यते भवता ? इतः अनतिदूरे स्थिते ग्रामे मम मातुलः निवसति । सः कृषिकः । परिश्रमेण जीवति सः । वयम् एतं चोर-वसतिप्रदेशं परित्यज्य तस्य समीपं गच्छाम । सः अस्मभ्यं कृषिभूमिं दद्यात् । तत्र परिश्रमेण कार्यं कुर्याम'' इति ।

तदा दामोदरः उक्तवान् - ''भवत्याः कथनम् अपि युक्तम् एव । तदनुगुणव्यवहारे मम तु सम्मतिः अस्ति । किन्तु एतं प्रस्तावं किं भवत्याः पिता अङ्गीकुर्यात् ?'' इति ।

''अत्र आगमनात् पूर्वं मया पित्रा सह वार्तालापं कृत्वा एव आगतम् । सः अपि सम्मतिं दर्शितवान् अस्ति । अतः आगच्छतु, गच्छाव'' इति अवदत् गौरी ।

''भवतु'' इति वदन् दामोदरः गौरीम् अनुसृतवान् ।





# चन्दमामा



# ग्राहकशुल्कपत्रम्

१. अहम् अधोनिर्दिष्टया भाषया प्रकाश्यमानां **चन्दमामाम्** अपेक्षे –

- ☐ इंग्लीष् ☐ हिन्दी ☐ मराठी ☐ गुजराती
- ☐ बङ्गाली ☐ ओरिया ☐ असामीस् ☐ तेलुगु
- ☐ कन्नड ☐ तमिळु ☐ मलयाळम् ☐ संस्कृतम्

२. अहम् इच्छामि यत्

- ☐ भारतीयग्राहकता ( भारतीयभाषाणाम् ) रू १२०/- एकवर्षस्य कृते (१२ सञ्चिकाः)
- ☐ भारतीयग्राहकता (आंग्लावृत्तेः) रू १८०/- एकवर्षस्य कृते (१२ सञ्चिकाः)
- ☐ विदेशीयग्राहकता INR ९००, US $२०, वर्षस्य कृते (१२ सञ्चिकाः) (भारतीयभाषाणाम्)
- ☐ विदेशीयग्राहकता INR १२००, US $२५, वर्षस्य कृते (१२ सञ्चिकाः) (आंग्लभाषायाः)

३. एतेन सह डि.डि. प्रेष्यते, रू ________________ ________

डि.डि. नं ____________ वित्तकोषः ________________

यस्य च धनं चेन्नैनगरे प्राप्तुं योग्यं, यच्च "Chandamama India Ltd"नाम्ना लिखितम् ।

४. सञ्चिका यस्मै प्रेषणीया तस्य सङ्केतः (आंग्लभाषया – 'Block' अक्षरैः)

________________________________

________________________________

________________________________

________________________________

५. स्वस्य ग्राहकताशुल्कस्य प्रेषणेन सहैव भवन्तः एकस्य मित्रस्य बान्धवस्य वा सङ्केतं चन्दमामायै प्रेषयितुम् अर्हन्ति, येन च सः चन्दमामापरिचयं प्राप्नुयात् ।

________ ________________

दिनाङ्कः हस्ताङ्कनम्

एतत् पत्रं प्रेष्यताम् अधोनिर्दिष्टसङ्केताय - **Chandamama India Ltd**

**82, Defence Offecers Colony, Ekkatuthangal, Chennai - 600 097**

**India. Tel/Fax : 044 - 234 73 99 / 234 73 84**

**e-mail : chandamama@vsnl.com**

**Website : http://www.chanadamama.org**

चन्दमामायाः प्रस्तुतिः

14

# अजेयः गरुडः

चित्रं - पाणिः

चन्द्रपुर्यां वार्ता प्रसृता भवति यत् राज्ञः महेन्द्रवर्मणः अपहरणं जातम् अस्ति इति । नरेन्द्रदेवः एकाम् अशरीरवाणीं शृणोति यत् राजा कुत्र गोपितः इति तान्त्रिकगुरुः नागबन्धुः वक्तुं समर्थः इति । अतः नरेन्द्रदेवः तेन तान्त्रिकेण मेलितुं गच्छति । तत्र व्यवस्थापकाः वदन्ति यत् सर्वैः अपि अत्रत्यः नियमः पालनीयः एव इति ।

रवीन्द्रदेवः एतत् श्रुत्वा क्रुद्धः ।

भवतः अतिथिना अस्माकं स्वामिनः आदेशाः पालनीयाः एव ।

किम् एते न जानन्ति यत् अहं सेनाधिपतिः अस्मि इति ? माम् एते कथम् आदेष्टुम् अर्हन्ति ?

भवतु, सः सर्वान् नियमान् पालयिष्यति तेन सः स्वामिनं प्रसादयिष्यति ।

तावता काचित् देववाणी नरेन्द्रदेवादिभिः श्रूयते ।

अस्माकं स्वामी अचिरात् एव प्रत्यक्षः भविष्यति सः भक्तेभ्यः अपेक्षते यत् ते पूर्ण-समर्पणं कुर्वन्तः अनन्यशरणाः भवन्तु, परमप्रमुखत्वेन माम् अङ्गीकुर्वन्तु इति ।


अद्य मानवकल्याणाय शुभे मुहूर्ते उभयोः महात्मनोः मेलनं भविष्यति । एषः श्रेष्ठः दिवसः ।


एतां देववाणीं श्रुतवतः नरेन्द्रदेवस्य अहङ्कारः क्षीयते ।
अहम् एकम् अपूर्वं दृश्यं पश्यन् अस्मि महोदय ! राजर्षिः नागबन्धुः पूर्णतया शरणं गतः चेत् भवान् राजा भवेत्, सम्राट् अपि भवेत् कदाचित् ।
अस्माकं स्वामिनः आगमनस्य प्रतीक्षा क्रियताम् । एतादृशं दृश्यं भवता इतःपूर्वं न दृष्टं स्यात् । तस्य आदेशाः प्रतीक्ष्यताम् ।
अहं तस्य सर्वान् आदेशान् ालयिष्यामि । इदानीं किं करणीयं मया ?


अचिरात् एव समग्रः प्रदेशः धूमेन आवृतः भवति । विलक्षणः कश्चन आकारः मन्दिरसमीपम् आगच्छति । तस्य शिरसि रत्नद्वयं सर्पस्य नेत्रे इव प्रकाशते । तस्य पृष्ठभागे किञ्चन दीर्घवस्त्रम् अस्ति, यच्च सर्पस्य चर्म इव दृश्यते ।

कटौ लम्बमानात् वस्त्रात् ऋते तस्य शरीरे अन्यत् वस्त्रं न दृश्यते । शरीरे लिप्तः मूलानां तीक्ष्णः गन्धः दूरात् एव अभिज्ञायते । तस्य कण्ठे मालाकारेण उभौ सर्पौ स्तः । सः नरेन्द्रदेवस्य पुरतः गच्छन् विकटाट्टहासं करोति ।

भवतः शत्रुः आ बहोः कालतः ममापि शत्रुः एव ! अस्माकम् अनुष्ठानेषु भागवहनाय भवतः स्वागतम् ।

मन्दिरं प्रति गच्छन् तान्त्रिकः स्वशिष्यं किमपि वदति ।




यदि लक्ष्यस्य पूर्तिः अपेक्ष्यते तर्हि एवं करणम् अपरिहार्यम्
अस्तु, वस्त्रपरिवर्तनं कृत्वा एषोऽहम् आगच्छामि ।


वेषपरिवर्तनं कृत्वा आगतः सः मन्त्रमुग्धः इव दृश्यते । सः तान्त्रिकं साष्टाङ्गं प्रणमति ।


उत्तिष्ठतु मित्र ! आगच्छतु, मत्पार्श्वे उपविशतु । भक्त्या मदीये अनुष्ठाने भागं वहतु च ।
(अनुवर्तते)




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'एप्रिल्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**
**सनत्कुमार उपाध्यायः**
*श्री शङ्कराचार्यसंस्कृतपाठशाला*
द्वारका-३६१३३५, जि. जामनगर(सौराष्ट्र)

**पुरस्कृतशीर्षिका**





**नयतु एतत्, प्रिया तुष्टिमेष्यति ।**
**पिबतु रसं, पिपासा शान्तिमेष्यति ।**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**
**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097


Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

